॥ श्रीः ॥

# वैष्णवपुराणेषु कर्मकाण्डविमर्शः

## (Karmakāṇḍa in Vaiṣṇava Purāṇas)


*प्रणेता*

**डॉ. मोतीरामशास्त्री रैणाः**



**2006**

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ।।

—भर्तृहरिः

प्रथम संस्करण
प्रकाशन वर्ष : 2006

मूल्य : रु. 375/-

मुद्रक:
रत्ना ऑफसेट्स लि. बी. 21/42 ए, कमच्छा, वाराणसी 221010

गहना कर्मणो गतिः

(गीता ४/१७)

# समर्पणम्

कर्मकाण्डगुरुभ्यो
मातापितृभ्यो
देवीश्रीधनवन्तीश्रीविश्वनाथ-
रैणामहोदयेभ्यो
नमः

मोतीराममैरणाः

रथयात्रातिथौ भौमे
वि. सं. २०६३
(२७-६-२००६)

# पुरोवाक्

**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥**

(श्रीमद्भ. गीता १८/४७)

**ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे**
**विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।**
**रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः**
**सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥**

(भर्तृहरिः)

विश्वस्मिन् वरिञ्चिप्रपञ्चे विश्वे सर्वेषामाधिदैविकाध्यात्मिकाधिभौतिकज्ञानविज्ञानविदां पुरतोऽयं प्रश्नो जागर्ति यत् सर्वप्राणिषु कुतः शारीरिकमानसिकबौद्धिकादिभेदाः सञ्जायन्ते । सर्वोऽपि जीवः समानः सर्वेषां जनकः कर्ता रचयिता ब्रह्मा एक एव, सर्वसमान एव । पुनश्च कथं प्राणिसु परस्परं वैषम्यं विलोक्यते । कोऽपि जन्मना अन्धः पङ्गुः बधिरो मूर्खो निर्धनस्तत्रैव सहोदर एव भ्राता सुदर्शनो गौरः सुदृढः सुवपुः कालान्तरे विद्वान् सुभगोऽर्थवान् जायते । कश्चन महाराजस्य श्रेष्ठिनो वा सूतिकागृहे एव कोट्यर्वुदपतिः सन् धरायां पतति । एतादृशीनां जिज्ञासानां विषये सर्वेषां मुखत एकमेव समाधानमायाति —

**कर्म प्रधान विश्व रचि राखा ।**
**का करि तर्क बढ़ावहिं शाखा ॥**

(तुलसीरामायणे)

अतः परं पुनः प्रश्न उदेति किमिति कर्म, कथं च जायते कीयन्ति च कर्माणि केनोदितानि कथं वा प्रभवन्ति कथं वा प्रभावयन्ति कथं वोद्भवन्ति कथं च विनश्यन्ति । एतेषां प्रश्नानामुद्भवः सृष्ट्या सहैव

जातः । महाभारतकालेऽप्येवं जातम् । तदा श्रीमद्भगवद्गीतायां भगवाँञ्छ्रीकृष्णेन गीतम् —

**लोकोऽयं कर्मबन्धनः ।**

(३/९)

विशेषतोऽस्यैव कर्मणो विकर्मणोऽकर्मणश्च विवेचने सम्पूर्णापि भगवद्गीता व्यस्ता । सर्वाण्यपि पुराणानि देवपूजाप्रसङ्गेन तीर्थयात्राप्रसङ्गेन ब्रह्मर्षिदेवर्षिमहर्षिवचनानुवचनप्रसङ्गेन कर्मण एव कथा प्रथितवन्ति । धर्मशास्त्रग्रन्था आचाराध्यायव्यवहाराध्यायप्रायश्चित्ताध्यायग्रथनपुरःसरं कर्मणो जन्मस्थितिविनाशप्रक्रियां निरूपिताः । किम्बहुना सर्ववेत्ता भगवान् स्वयमनुभवति —

**कर्मणो गहना गतिः ।**

(श्री. गी. ४/१७)

श्रौतसम्बन्धिनो मन्त्रा गृह्यसूत्राणि पुराणानि धर्मशास्त्रग्रन्थाः अथवा सर्वेऽपि आध्यात्मग्रन्थाः कर्मणो माहात्म्यवर्णने निपुणं व्यस्ताः ।

अस्माकं च कुलं कर्मकाण्डकल्पितम् । स्वकुले एवं श्रूयते यत् पञ्चाप(पंजाब)केशरिमहाराजरणजीतसिंहो भारतस्य पश्चिमभागं आधुनिकपंजाबाफगानिस्तानादिप्रदेशं विजित्य सरदारवीरसिक्खराज्यं संस्थापितवान् । तदैव स्ववीरप्रमुखौ मोतीसिंहं गुलाबसिंहं च पुञ्छप्रदेशस्य शासकरूपेण नियोजितवान् । पश्चाच्च गुलाबसिंहः सामदामभेदेन कश्मीरप्रदेशमपि गृहीतवान् । ततो जम्मूकश्मीरनामकमेकं राज्यं निर्मितवान् । जम्मूनगरी च राजधानीरूपेण प्रथिता । ततो म्लेच्छाक्रान्तानि तीर्थानि देवीदेवमन्दिराणि तीर्थजलाशयाः सिद्धस्थानानि च सर्वाणि परिष्कृतानि पवित्रीकृतानि । एतस्मिन्नेवावसरे महाराजः श्रीगुलाबसिंहः स्वीयराज्ये संस्कृतसस्कृतिसंस्कारसंरक्षणं सम्पोषणसम्वर्द्धनार्थं बद्धपरिकरः स्वीये जनपदे विद्याचारसम्भार-

भूरिभूसुरभूषिते जन्द्राहग्रामे निवसतो वेदान्तशास्त्रगहनकान्तार-चारिणः पण्डितशार्दूलस्य श्रीधूर्जटिरैणामहानुभावस्य नाम श्रुत्वा तत्पादपाथोजयोः स्वयं समुपस्थाय स्वराजधानीं जम्मूनगरीमानयत् । सम्यक् सम्प्रार्थ्य वैदिकधर्मक्रियानुष्ठानप्रकिया प्रशिक्षणप्रचारप्रसारभारं ब्रह्मर्षिगुरौ श्रीधूर्जटिमहोदये निक्षिप्तवान् । ततः प्रभृति श्रीधूर्जटिगुरुः जम्मूप्रदेशीयान् नगरनिवासिनो ग्रामनिवासिनश्च श्रौतस्मार्तकर्म-काण्डविद्यायां प्रवीणान् विधाय लुप्तश्रौतस्मार्तकर्मकाण्डविद्याः समेधितवान् ।

अतः परं तत्सूनुः पं. काशीनाथशास्त्री तत्तनयः श्रीशिवनाथ-शास्त्री च प्रदर्शितदिशा राज्ये कर्मकाण्डदीक्षाशिक्षे प्रणिनिहित-मनस्कौ च प्रवर्तितवन्तौ । अस्मिन्नेव कुले पूर्वजन्मोपार्जितपुण्य-कर्मराशिना लब्धजन्माहमपि प्रपितामहपितामहपितृप्रदर्शितपथेन वेदव्याकरणज्यौतिषपुराणधर्मशास्त्रप्रभृतिशास्त्रण्यधीत्य माता-पित्र्योरनुशासने तिष्ठन् विद्याप्रचारप्रसारकर्माणि संलग्नः श्रौतस्मार्त-कर्मकाण्डाध्ययनाध्यापनानुष्ठानपरः लोकानपि कर्मकाण्डेन सम्पन्नान् अकरवम् ।

कालान्तरे केन्द्रीयशिक्षामन्त्रालयेन संस्थापिते रणवीरकेन्द्रीय-संस्कृतविद्यापीठे साहित्याध्यापकपदे नियुक्तः बहुकालपर्यन्तं साहित्य-शास्त्रादिकमध्याप्य विद्यापीठीयसेवातो निवृत्तः । ततः स्वपूर्वज-श्रीधूर्जटिकाशीनाथविश्वनाथेभ्यः प्राप्तकर्मकाण्डविद्यः कर्मकाण्ड-विद्यासंरक्षणाय कर्मकाण्डग्रन्थप्रणयने मनो निहितवान् । तस्यैवेदं फलम्—**वैष्णपुराणेषु कर्मकाण्डविमर्शः** । कर्मकाण्डविषयो विस्तृतः विशालश्च । सर्वोऽपि विषयः क्रोडीकृत्य लघुकायग्रन्थे आधातुमसमर्थः कर्मकाण्डस्यैकभागः वैष्णवपुराणोक्तकर्मकाण्ड-विषयं गृहीतवान्, अतोऽस्य नाम वैष्णवपुराणेषु कर्मकाण्डविमर्श-इति कृतवान् ।

कर्मकाण्डप्रधानविद्याकुले लब्धजन्माहमचिन्तयं यत् कर्मकाण्ड-विषये किमपि विवेचनीयं कर्मकाण्डस्य विस्तृतं विशालं वाङ्-मयम् । श्रुतिस्मृतिपुराणादिवर्णितकर्मकाण्डविषयानां विवेचनमतीव कठिनम् । अतः केवलं पुराणेष्वेव दृष्टिर्निक्षिप्ता यतो हि अस्माक-मुपास्यः श्रीसीतारघुनाथः । उपास्यस्थानं च श्रीरघुनाथमन्दिरकम् । अतो वैष्णवकुलप्रसूतोऽहं वैष्णवकर्मकाण्डविषयं गृहीतवान् । तथाप्यष्टादशपुराणानि सन्ति । एतावता एतेषां सर्वेषामपि लघु-कलेवरे ग्रन्थे विवेचनं कठिनवेति कृत्वा वैष्णवपुराणेष्वेव दृष्टि-र्निक्षिप्ता । अतो वैष्णवपुराणोक्तकर्मकाण्डविवेचनमेवात्र विहितम् ।

एतावता कर्मकाण्डविवेचनमावश्यकं यत् सृष्टिस्थितिसंहार-संसारवैचित्र्यकारणं कर्मैव । पूर्वमीमांसका विद्वांसस्तु ईश्वरस्थानीयं कर्मैव मन्यन्ते । कर्मैव सुकृतदुष्कृतकारणम् । कर्मैव च सुकृत-दुष्कृतकर्तनम् । काण्डशब्दस्यानेकेऽर्थाः । तत्रैकोऽर्थः काण्डः समूहो विभागो वा यथा बालकाण्डः, अयोध्याकाण्ड इत्यादि । अपरोऽर्थः कर्तनम् । एवं च कर्मणां काण्डः अर्थात् कर्मकर्तनम् । येन कर्मणा सुकृतं निकृत्य दुष्कृतमेधते दुष्कृतेन च कर्मणा सुकृतं निकृत्य दुष्कृतमेधते । इदं कर्म एव एकं सदा सहायकं सहगामिमित्रम् । अपरे तु अन्ते त्यजन्त्येव । यथाह—

धनानि भूमौ पशवश्च गोष्ठे<br>
नारीजनो द्वारि सखा श्मशाने ।<br>
देहश्चितायां परलोकयाने<br>
कर्मानुगो गच्छति जीव एकः ॥

तत्र वैष्णवपुराणेषु कानि सुकृतकर्माणि कानि च दुष्कृतकर्माणीति अस्मिन् ग्रन्थे शक्तिविवेचितं पञ्चष्वध्यायेष्वयं ग्रन्थः प्रपूरितः । अस्मिन् विवेचने यया साफल्यं लब्धं पूर्णता च जातेति वक्तुं न शक्यते । यतो हि पूर्णं तु एकमेव ब्रह्म शुद्धमपि तदेव । ममास्मिन्

प्रयासे कृपालवः सुधियः एवानुग्राहकाः । विदुषां कृतेऽयं ग्रन्थो मम लघुः पत्रपुष्पाञ्जलिः ।

अस्य पूर्णतायां येषां कृपा साहाय्यं वा लब्धं तेषां श्रीमुरलीधर-पाण्डेयमहोदयानां श्रीरामनारायणमिश्रमहाभागानां श्रीमतां रामचन्द्र-पाण्डेयमहोदयानामुपकारं स्मारं स्मारं स्त्रीयो कृतज्ञतां ज्ञापयामि तथा श्रीमतामनेकशास्त्राविदां श्रीमुरलीधरपाण्डेयमहोदयानां दीर्घायुष्यार्थं स्वकुलगुरुं श्रीसीतारघुनाथं प्राथये ।

अन्ते च

**गच्छतः स्खलनं क्वापि भवेद्वेव प्रमादतः ।**<br>
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥**

कुलदेवीश्रीमल्लमातृचरणसरोरुहयोः समर्पणमस्तु, इति शम् ।

विदुषामाश्रवः<br>
**मोतीरामशास्त्री रैणा**

रथयात्रा, आषाढ़शुक्लाद्वितीया<br>
भौमवासरे, २०६३ वि.सं.<br>
(२७-६-२००६ ई.)



# विषयसूची

## द्वितीयाध्याये ४४-८५



## तृतीयाध्याये ८६-१६३

# मङ्गलाचरणम्

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

या देवता मल्लपदाभिधाना
राजानकानां समुपास्यमाना ।
सर्वार्थदात्री सकलाघहन्त्री
तां लोकधात्रीं शरणं प्रपद्ये ॥

कीर्तिस्तु यस्याः प्रथिता मातुः,
विद्याव्रतीनां विधिनार्चकानाम् ।
निःश्रेयसोऽर्थोऽप्यखिलप्रसादः
शोधप्रबन्धे भवतु भवान्याः ॥

## वंशपरिचयः

श्रीविश्वनाथं पितरं जननीं चाप्यहर्निशम् ।
धनवन्तीनामाभिधां स्नेहाञ्चितविग्रहाम् ॥
पितामहं सदाचार्यं शिवनाम शिवप्रदम् ।
पितामहीं सुलक्षणां मुरलीदेवीं देवताम् ॥
प्रपितामहं महादेवं काशीरामं शिवप्रियम् ।
प्रपितामहीं च पूज्यां रुक्मणीं शिवदायिनीम् ॥
प्रणम्याञ्जलिबद्धोऽहं कर्मकाण्डकृतार्थधीः ।
अल्पपदाभिधानां च देवतां तां प्रणम्य वै ॥
कर्मकाण्डे दत्तमना मोतीरामो यथाविधि ।
श्रीवैष्णवपुराणेषु कर्मकाण्डविमर्शकम् ॥
ग्रन्थमिमं समुद्दिश्य यथाशास्त्रं विचार्य च ।
प्रथयति प्रथां काञ्चित् कलिकल्मषहारिणीम् ॥

संहितोपनिषदां वै वचनैरर्थगर्भिताम् ।
पञ्चरात्रागमाद्यल्पैरर्थसारभरैः परैः ॥
निबद्धतं प्रबन्धं हि भजन्तं भाग्यभारतीम् ।
विद्वांसः शास्त्रनिपुणाः कर्मकाण्डविचक्षणाः ॥
विहितं मे प्रयासं च प्रसादयन्तः शुभाशिषा ।
प्रबन्धमेनं सुविचार्य कर्मकाण्डक्रियादिषु ॥
विनियोज्य दयादृष्ट्या कृतार्थयन्तु मामपि ।
विदुषां मोदमावोढुं मनोवाक्कायकर्मजम् ॥
शोधप्रबन्धभाषा मे क्रियाकाण्डविमर्शनी ।
भातु भारते भाषासु भूषिता भुक्तिमुक्तिदा ॥
एकादशी समुपास्या व्रतराजधिया सदा ।
कर्मकाण्डक्रियाज्ञानमघतापविनाशनम् ॥

गृहे गृहे पुस्तकभारभारः पुरे पुरे पण्डितयूथयूथः ।
वने वने तापसवृन्दवृन्दाः न कर्मवेत्ता न च कर्मकाण्डी ॥
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
कर्म च कण्ड्यते येन कर्मकाण्ड उपास्यताम् ॥
अत्र च परमा शान्तिरमुत्र परमं सुखम् ।
विन्दतीव परं मोक्षं राजर्षिर्जनकादयः ॥



# आमुखम्

अनुसन्धेयविषयो वैष्णवपुराणेषु कर्मकाण्डः । अयं विषयः सामान्यतया विशेषतया च विमर्ष्टुं योग्यः, तस्मादेव विषयेऽस्मिन् शोधकार्यं कर्तुं प्रवृत्तिर्मे जाता । यद्यपि कर्मकाण्डशब्देन न केवलं वैष्णवपुराणेष्वेव विषया विवेचनीयाः सन्ति, परन्तु अन्येष्वपि पुराणेषु ते विषयाः विमर्शार्हाः सन्ति, तथापि वैष्णवपुराणेषु कर्मकाण्ड-विषयकानुसन्धानात्मिका प्रवृत्तिः सामान्यतया जाता परन्तु विशेषतया । यतः एतत् सत्यमेवास्ति जन्म गृह्णतां प्राणिनां धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु मोक्ष एव प्राधान्यतां भजति । मोक्षश्च बहुविधोपायैः उपासनाप्रधानैः लभ्यते । विभिन्नमतानुसारं यद्यपि मोक्षपदार्थः विभिन्नतया गीयते उपदिश्यते वा परं विवदमानेषु मोक्षपदार्थेषु परमार्थतः परमवैदिकसिद्धान्ततया इतिहासपुराणाभ्यां विभिन्नदर्शन-शास्त्रैश्च प्रमाणीभूतः विष्णुसान्निध्यरूपः सामीप्यरूपः सार्ष्टिरूपः सायुज्यरूपश्चेति वैष्णवाचार्यैः परमादृतः जीवोपकारकः परमानन्द-दायकः जन्मसाफल्यसाधकः स्वीकृतः । अयमेव पक्षः जीवानां समुद्धारयात्तमहत्त्वः प्रतीतिपथमवतरति । वस्तुत एवंविधे मोक्ष-स्वरूपे भक्तानां महती निष्ठा दरीदृश्यते । तथाविधमोक्षसाधकानि पुराणानि चाष्टादशपुराणेषु षडेव सन्ति । यथा भगवता शङ्करेण पार्वत्यै उपदिष्टानि, सात्त्विकरूपाणि यथा —

**वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।**
**गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥**
**सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै**
**तात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ॥**



**तथैव तामसा देवि निरयप्राप्तिहेतवः ॥** इति ।

इत्थं पद्मपुराणवचनमनुरुध्य एव अन्यपुराणापेक्षया वैष्णवपुराणेष्वेव कर्मकाण्डविषयकविमर्शऽनुसन्धानायाङ्गीकृतः, यतः भारतीयासु समग्रासु विद्यासु पुराणानां सर्वोपरि स्थानं विद्यते एव । पुराणेष्वपि च वैष्णवादीनि सात्त्विकपुराणान्येव निःश्रेयससिद्धौ उपायभूतानि । अत्र च लोकरक्षार्थमेव धृतविग्रहस्य श्रीविष्णोः सर्वशक्तिमत्ता सर्वदेवदैवितं तदीयाचारचरित्रञ्चावतारचरितं विविधोपासनाविधयश्च सम्यगुपवर्णिताः । इदमपि एकं तथ्यं सुस्पष्टं यत् पुरा खलु पुराणविद्या लुप्तासीत् तदुद्धाराय एव भगवान् विष्णुरेव वेदव्यासरूपतयाऽवतीर्य अष्टादशपुराणानां सपरिष्कृतं संरचनां विधाय पुराणविद्यायाः रक्षां कृतवान् उक्तञ्चापि वचनमत्र— **अष्टादशपुराणानां कर्ता सत्यवतीसुतः** ॥ इति ।

वैष्णवपुराणेषु षट् पुराणानि यानि परिगणितानि तेषामपि समासतः पारिभाषिकोऽर्थोऽत्र उपस्थापनीयः प्रतिभाति यथा विष्णुपुराणं प्रथमम् - अत्र विष्णोः स्वरूपं तदीयोपासनाविधिर्विलक्षणो वर्तते तदधिकृत्य एव विष्णुपुराणेति नाम प्रशस्तम् । एवं नारदमुद्दिश्य नारायणेन विविधानां व्रतादिकर्मणां साङ्गोपाङ्गमुपदेशः कृतः । तदधिकृत्य तस्य नाम नारदपुराणमिति । एवं भागवतपुराणेऽपि भगवतः भागवतानाञ्च विशुद्धचरित्रं लीलासमन्वितं विशिष्टं जीवेश्वरविषयकज्ञानञ्च समुपदिष्टम् । तदधिकृत्य एव भागवतं नाम प्रशस्तम् । एवं गरुडपुराणेऽपि खगेशं गरुडं निमित्तीकृत्य व्रतोपवासपूजनादीनि सुप्रतिपादितानि । अत एव तन्नाम यथार्थमेवेति । एवं पाद्मेऽपि भगवतो विष्णोर्नाभिकमलादुद्भूतसृष्टिवृत्तान्तमाश्रित्योपक्रमो जातः । तत्र भगवद्भक्ति-भागवतधर्मनिरूपणपुरस्सरं वैष्णवदीक्षाविधिः वैष्णवसम्बन्धिप्रश्नानां महत्त्वपूर्णानां पार्वतीकृतानां तदुत्तरं च महेश्वरकृतं वैष्णवानां महन्महत्त्वाय दृष्टिपथायते । तेन पुराणस्य नाम अन्वर्थमेव । एवं वाराहपुराणे भगवतो विष्णुलीलया वाराहरूपेण पृथिव्या उद्धारः कृत इति वर्णनम् ।

तथा तत्र भगवतो वाराहरूपिणो विष्णोर्महत् महत् सामर्थ्यम्, तदुपासनादिकञ्चातिशयेन वर्णितम् । तस्माद् वाराहपुराणेति नाम अन्वर्थतां भजते । इत्थमुक्तवचनैः प्रमाणैश्च वैष्णवपुराणेषु कर्मकाण्ड इति विषयो महन्माहात्म्यं प्रकाशयति, तदनुरोधेनैव विषयोऽयं अनुसन्धानाय सुतरां प्रयोजयति । विष्णुपरे देवाधिदेवत्वेन वर्णनं तत् पुराणेषुसुविस्तरं वर्तते ।यस्यानुमोदनं निगमागमैर्वेदान्तादिभिरपि प्राधान्यतया क्रियते प्रमाणञ्चात्रापि इत्थम् —

**नारायणः परं ब्रह्म तत्त्वं नारायणः परः ।**
**नारायणः परं ज्योतिरात्मा नारायणः परः ॥**

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति प्रमाणेन विष्णोः परत्वे न केषाञ्चित्सन्देहः । भगवता शङ्करेणापि पाद्मे उक्तम्, यथा तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः परमात्मा परं ब्रह्म परमज्योतिः परात्परः यज्ञो यज्ञपतिः साक्षाद् ब्रह्मणः पतिरेव चेति वचने यज्ञशब्दः प्रधानतया कर्मकाण्डसूचकः एव । तस्माद् यज्ञप्रधानस्य यज्ञपतेः परब्रह्मणे साक्षात्कारः मानवानां जीवनस्य प्रधानतमलक्ष्यं विद्यते ।

यज्ञश्च श्रौतस्मार्तरूपतया विविधाः विशिष्टाः सन्त्येव, तथापि जन्मतोऽन्तकालं यावद् विभिन्नाः संस्काराः नित्यनैमित्तिककाम्यक्रियादयः कर्मपदाभिहिताः यज्ञरूपा एव सर्वत्र कर्मस्वात्मनः संस्कारपुरस्सरं तत्कर्मद्वारा लौकिकपारलौकिकफलप्राप्तिरेव ऐहिकामुष्मिकरूपतया प्रतिपादिता । तत्रापि यज्ञानां जपयज्ञोऽस्मि इति वचनं भगवतः कृष्णस्य प्रमाणयति यत् सर्वकर्मणां सर्वयज्ञानाञ्च पर्यवसानं जपे एव । अत एव लोके जन्मगृहितॄणां विशेषतो मानवानां कर्मसम्पादनं प्राधान्येन शास्त्रेषूपदिष्टं तेन कर्मकाण्ड इति विषयो वैष्णवपुराणानुसारं सर्वथा विमर्शितव्य एव । अत्र प्रथमेऽध्याये सावतरणं प्रमाणयुक्तिपुरस्सरमेव प्रथमं पुराणानां वेदार्थोपबृंहणात्मना वैशिष्ट्यमुपपाद्य सर्वथा वेदानुकूल्यं पुराणाना-

मुदीरितम् । तत्रापि च वैष्णवागमस्य पाञ्चरात्रागमस्य प्रभावः वैष्णवपुराणेषु समुदाहृतः कथं संहितादिभिः पुराणादीनि प्रभावितानि न पुराणैः संहिता इति विषये युक्तयः प्रदर्शिताः । ततः परमेव प्रसङ्गतोऽनुसन्धेयशीर्षके प्रथमोपात्तस्य वैष्णवस्य स्वरूपमुपवर्णितम् । वैष्णवत्वप्राप्तये च दीक्षास्वरूपं वैष्णवपुराणोपयोगिसंहितावचनञ्चोपस्थापितम् । तत्रैव प्रसङ्गतः मुक्त्यपरपर्यायस्य परमैकान्तस्य पात्रता वैष्णवेषु प्रोक्ता ।

पुनश्च विशिष्टं लक्षणञ्चापि प्रभाषितं प्रमाणम् । जीवानां दासरूपता ईश्वरस्य स्वामीत्वप्रतिपादनं कृतम् । तत् पञ्चसंस्कार-दीक्षितानां वैष्णवानां जगत्पूज्यत्वमुपपादितम् । तत्र विरक्तानां गृह-स्थानां ब्रह्मचारिणां समेषां कृते शङ्खचक्राङ्कनमावश्यकं प्रतिपादितम्, येन हरिपदप्राप्तिर्भवति । वैष्णवेषु चतुर्विधेष्वपि श्रीवैष्णवस्य श्रीरामानुजसम्प्रदायस्य कृतेऽष्टाक्षरमन्त्रदीक्षाविषयकमाहात्म्य-प्रकाशनं सप्रमाणं विहितम् । पद्मपुराणानुसारं जनन्याः कुलस्य जन्मभूमेः पितृणाञ्च क्रमशो प्राशस्त्यमुद्धारश्च वर्णितः इत्थमेतावता माहात्म्यप्रकाशनेन तेषां वैष्णवपुराणमहत्त्वं विभावाः स्वरूपञ्च वर्णितम् । पुराणानामपि सात्त्विकराजसतामसरूपतया भेदाः प्रकाशिताः । इत्थं प्रसङ्गतः पुराणानुगामिश्रुत्यनुगामिनीनां स्मृतीना-मपि सात्त्विक-राजस-तामसभेदा दर्शिताः ।

इतः परमेव वैष्णवपदेन वैष्णवसम्प्रदायस्य तत्तत्संप्रदायप्रवर्तका-चार्याणां श्रीरामानुजादीनाञ्च वैष्णवधर्मप्रवर्तकत्वेन सङ्क्षेपतः चर्चा विहता, तेषां सिद्धान्ताश्च उपासनाश्च वर्णिताः । तत्रापि श्रीरामानुजा-चार्यस्य प्रवर्तकत्वमुक्त्वा श्रीवैष्णवसम्प्रदायस्य परमवैदिकत्वेन महत्युपयोगिता दर्शिता । तदनन्तरमेव वैष्णणानां भक्तिः भगवति भागवतेषु च वर्णिता । परस्तादेव नारायणस्यैव परब्रह्मत्वप्रतिपादनं कृतम् । श्रियश्चापि सदा विष्णो रामाद्यवतारकाले सीतादिरूपेणा-विर्भावे प्रमाणमुक्तम् । इतः परं हि भगवत्याः पार्वत्याः महेश्वरं प्रति

कृतप्रश्नानां वैष्णवत्वादिविषये महेश्वरकृतसम्यगुत्तरञ्चापि पद्म-पुराणेन प्रमापितं विभिन्नैर्वचनैः । ततः परं श्रौतस्मार्तकर्मसम्पादनाय श्रीवैष्णवदीक्षाविधिरधिकारश्च मानवानां कृते प्रदर्शितः । सर्वविध-कर्मस्वाधिकारसिद्धयेऽपि वैष्णवदीक्षया आवश्यकता प्रोक्ता । न्यास-विद्यायाः ब्रह्मविद्यायाः स्वरूपमुक्तम् । भगवतो विष्णोरपि वामनाद्य-वतारे स्वरूपञ्चसंस्काररूपा वैष्णवदीक्षा स्वयमुक्ता तेन तत्र नारद-पाञ्चरात्रस्य भागवतपुराणस्य प्रमाणं प्रस्तुतम् । पुनः प्रतिष्ठा-विधिश्च यथाशास्त्रं वैष्णवानां कृते दर्शितः । आचार्यस्य च महत्त्वं प्रकाशितम् । एवमन्यपुराणगतविषया अपि यथोपासनं विहिताः ।

द्वितीयाध्याये कर्मकाण्डशब्दार्थः सम्यग् विहितः सप्रमाणः सयुक्तिश्च । पुनश्च कर्माशयो दर्शितः, पुनः कर्मणां भेदा दर्शिताः । कर्मविशेषतल्लक्षणं चापि तत्तत्पुराणानुसारमेव विहितम् ।

तृतीयाध्याये विष्णुपुराण-नारदपुराण-भागवतपुराण-गरुडपुराण-पद्मपुराण-वाराहपुराणानुसारमेव कर्मकाण्डविमर्शः कृतः ।

चतुर्थाध्याये श्रौतकर्मविमर्शः । ततः परमोपादेयतया सप्रसङ्ग-पुरुषोत्तममाहात्म्यञ्च वर्णितम् । तथा च मलमासमाहात्म्यं वर्णितम् ।

पञ्चमाध्याये वैदिकसाहित्यविमर्शः पुनः वैष्णवोपदेशः । ततः वैष्णवानां श्राद्धविधानम् । वैष्णवानां समन्त्रककुशकण्डिकाविधिः विष्णुबलिविधिश्च वर्णितः । तथा च धर्मशास्त्रवचनानि प्रोक्तानि एवं पञ्चाध्यायात्मकः प्रबन्धोऽयं प्रस्तूयते । विस्तृतो विचारः प्रबन्धेऽस्मिन् यथाशक्यं प्रवक्ष्यते ।



श्रीगणेशाय नमः

# अथ प्रथमोऽध्यायः

**वैष्णवपुराणेषु कर्मकाण्डविषये श्रीवैष्णवस्वरूपनिर्धारणे श्रीवैष्णवपुराणानां वैशिष्ट्यम्**

इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति वचनेन **पुराणानि** सर्वाण्यपि वेदार्थमेव विधिनिषेधात्मकं कर्म, कर्मकाण्डज्ञानोपासनात्मकं काण्डत्रयाभिमतं प्रकाशयन्ति । न किञ्चिदपि स्वतन्त्रं कदापि प्रतिपादयन्तीति रीत्याऽऽगमादिसंहितोक्तमपि तथ्यं पुराणादीनि संव्याहरन्ति । आगमेषु वैष्णवशैव-तन्त्राद्यनेकविधागमाः सन्ति । तत्रापि वैष्णवागमेषु पाञ्चरात्रागमो विशिष्टः, एवं विभिन्नासु संहितासु विहगेन्द्रहयग्रीववाजसनेयिगरुडप्रश्नाद्यनेकाः संहिताः प्रशस्तास्तासु प्रोक्तान् विषयानेव सङ्कोचविकासात्मना यथाकालं यथाविधि यथासम्प्रदायं यथापात्रमधिकृत्य पुराणानि सम्यक्तया प्रतिपादयन्त्येवेत्यत्र न कश्चन विवादः । एतदपि सत्यं सम्यक् वक्तुं शक्यं यत् तत्तदागमसंहितादिपुराणादीनां लोके समुदयः प्रवर्तनमुद्धारणादिविषयकालनिर्धारणञ्चापि यदि समीक्ष्येत, तर्हि पुराणाद्यपक्षेयाऽऽगमादीनां संहितानाञ्चैव प्राचीनत्वमुपकार्यत्वेन प्राधान्यं सिद्ध्यति ।

पुराणादीनि तु आगमाद्यपेक्षया परस्ताद् भाविन्येव । वेदार्थस्योपबृंहणेनागमसंहितादितात्पर्यविषयप्रकाशनेन पुराणान्युपकारकाण्येवेत्यवधारणेनागमसंहितादिभिः पुराणानि सम्प्रभावितानि सन्ति । तस्मादत्रोक्तशोधविषये यथास्थलमागमसंहितादिभूयांसि वचनानि प्रमाणत्वेनोपन्यस्यन्ते । बहुविधपर्यालोचनमुद्रयाऽऽगमादिभिः पुराणादीन्येव प्रभावितानि वक्तुं शक्यन्ते, न तु पुराणादिभिरागमसंहिताः ।

अस्मादेव हेतोरत्र प्रथमं श्रीवैष्णवस्वरूपम्, श्रीवैष्णवपुराणानां तथा तदुपरि प्रोक्तागमादिप्रभृतीनां प्रभावशालीनि वचांसि च प्रदर्शनीयानि समपेक्ष्यन्ते । ततः परं श्रीवैष्णवपुराणोक्तकर्मकाण्डविषयो विमर्ष्टुं शक्यः । अतोऽत्र शोधप्रबन्धे वैष्णवपुराणान्यतरतत्तदागमसंहितादि-वचनप्रमाणादीनामुपन्यासे विषयान्तरबुद्धिर्नावधारणीया विद्वद्भिरिति विनिवेद्यन्ते सानुनयम् । वेदोपबृंहणपरत्वे क्वचिद् वेदमन्त्रा अपि सूद्धृता यदि भवेयुश्शोधप्रबन्धे तर्हि नोपादेयता हीयते ।

### श्रीवैष्णवस्वरूपम्

श्रीवैष्णवः कः ? इति विषयं नैकं शास्त्रं प्रमाणं, परन्तु प्रभूतानि शास्त्राणि संहिताः स्मृतयः, पुराणानि, वेदाश्च विशेषतः प्रमाणभूताः तद्यथा – श्रीवैष्णवत्वप्राप्तये प्रथममत्र प्रश्नसंहितायामेव[1] भगवान् विष्णुरेव श्रीवैष्णवत्वप्राप्तये दीक्षास्वरूपं वर्णयति—

दीक्षास्वरूपं प्रथमं वदामि कमलालये ।
ईक्षते कर्मणा येन तद्विष्णोः परमं पदम् ॥
यथैव कर्मकाण्डेषु दीक्षोक्ता यागसिद्धये ।
तथैवैकामने वेदे पूजा यागादिसिद्धये ॥
मया कृता यस्य दीक्षा सोऽहमेव न संशयः ।
प्रत्यहं पूजनं कुर्यां पञ्चसंस्कारसंस्कृतः ॥
इति निश्चित्य यः पूजां प्रत्यहं कुरुते रमे ।
वैष्णवानां हि सर्वेषां योग्या सा गृहपूजने ॥

तथा च

तापः पुण्ड्रस्तथा नाम मन्त्रो याग एव च ।
अमी पञ्चैव संस्काराः परमैकान्तिहेतवः ॥

---

1. प्रश्नसंहितायां १६ अध्याये, श्लोकः १८ ।

तस्मादेव

1- लक्ष्मत्वादात्मभर्तुः
2- प्रकृतिपरिणतिग्रन्थिदाहात्मकत्वात्
3- कर्माङ्गत्वात्
4- हितत्वात्
5- तनुतनुशयोः संस्कृतित्वात्
6- प्रियत्वात्
7- हेतुत्वात् सद्गृहीतेरितपरिहृतेः
8- द्रावणात् किङ्करादेः धार्यं चक्रादिचिह्न कृतिभिरकृतिभिः श्रेयसे मुक्तये च ।

1- जीवात्मनां भर्ता स्वामी परमात्मा तस्य लक्ष्मत्वात् ।
2- प्रकृतिपरिणामस्वरूपसंस्कारस्य यो हि मूलभूतः सूक्ष्मो चित् पदार्थः तस्य यो ग्रन्थिः दृढसम्बन्धविशेषः तदपवारकत्वात् ।
3- भगवदाराधनादिसमस्तकर्मणामङ्गभूतत्वात् ।
4- समस्तचेतनानामनिष्टनिवारणपुरस्सरमिष्टप्रयोजकत्वाच्च ।
5- शरीरात्मनोर्द्वयोः संस्काररूपत्वात् ।
6- धार्मिकाग्रेसराणां वैदिकशिष्टजनानां प्रियत्वात् ।
7- सत्यरूपस्य परिग्रहादसत्यरूपस्यापरिग्रहाच्च । यमादि-किङ्कराणां स्पर्शाभावात् ।
8- उपायानुष्ठानशालिनां पुरुषाणां तथा प्रयन्तिमार्गनिष्ठानां निवृत्तिधर्मिपुरुषाणां च चक्रादिचिह्नधारणं परमश्रेयस्करम् ।

यथाश्रुतिरपि प्रमाणमुक्तविषये, परमात्मा श्रीमन्नारायणः पतिं विश्वस्यात्मेश्वरशाश्वतं शिवमच्युतम् । "नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।"

"दासभूताश्च ते सर्वे ह्यात्मनः परमात्मनः ।
नान्यथा लक्षणं तेषां बन्धे मोक्षे च विद्यते ॥"
स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥

इत्यादिभिः स्मृतिवचनैः समस्तजीवात्मनां प्रभुः परमात्मा विष्णुः सिद्ध्यति, तस्मादेव वैष्णवत्वप्राप्तये तदीयशङ्खचक्रचिह्नधारण-मनिवार्यम् ।

दासभूतं यदात्मानं बुध्येत परमात्मनः ।
तदेव गात्रं कुर्वीत शङ्खचक्रादिलाञ्छितम्[1] ॥ इति ।
उपासितं गुरोर्वर्षं विष्णोर्दास्यमभीप्सतः ।
विहिताः पञ्चसंस्काराः युक्तस्यानन्यचेतसः ॥

अत एव श्रीवैष्णवलक्षणमुक्तं समासतो यथा[2]—

तापादिपञ्चसंस्कारा मन्त्ररत्नार्थकोविदः ।
वैष्णवः सः जगत्पूज्यो याति विष्णोः परं पदम् ॥

यथा च—

विरक्तो वा गृहस्थो वा स कामोऽकाम एव वा ।
तापादिना विमुक्तः स्यात् पातकैः कोटिजन्मजैः ॥
शङ्खचक्राङ्कितं गात्रं दयायाः भाजनं हरेः ॥
अतिवर्तितुमप्येनं न भवन्ति यमादयः ।
निवसामि सदैवाहं मच्चक्रेशाङ्कितो यदि ॥
मच्चक्रपूतदेहस्य यच्च पादोदकं महत् ॥
विरजायाः समं विद्धि महापातकनाशनम् ॥
व्यालं दृष्ट्वा यथा लोके दर्दुरा भयकम्पिताः ।
ऊर्ध्वपुण्ड्राङ्कितं दृष्ट्वा कम्पन्ते यमकिङ्कराः ॥
केवलस्योर्ध्वपुण्ड्रस्य धारणादपि मानवः ।
देहजैः पापसङ्घातैः मुच्यते नात्र संशयः ।
योजयेन्नाम दास्यान्तं भगवान्नामपूर्वकम् ।
तस्मात् पापानि नश्यन्ति पुण्यभागी भवेन्नरः[3] ॥

---

1. भारद्वाजसंहितायां प्रोक्तं तत्रैव परिशिष्टे, 3/26 ।
2. बृहद्, वृ. ह. ।
3. बृ. हा., 1/34 – 35.

इत्थं प्रोक्तप्रमाणैः श्रीवैष्णवस्वरूपं लक्षणमुद्रया परिलक्षितम् । स एव मन्त्रसंस्कार उच्यते । यो वैदिकमन्त्रगुरुपरम्परया यथाविधि लब्धः, स एव शिष्यायोपदिश्यते । सर्वेषु वेदमन्त्रेषु श्रेष्ठो मूलमन्त्र एवास्ति । यतः स वेदमन्त्रः चतुर्णां वेदानां सारभूतः । यथोक्तमत्र विषये —

**चतुर्णां वेदानां हृदयमाकृष्य विधिना**
**चतुर्भिर्यद् वर्णैः समघटितनारायण इति ।**
**तदेतद् गायन्तो वयमनिशमात्मानमधुना**
**पुनीमो जानीमो न हरिपरितोषाय किमपि ॥**

यथा महाभारतेऽपि -

**सर्वार्था वेदगर्भस्थाः वेदाश्चाष्टाक्षरे स्थिताः ।**
**अष्टाक्षरस्तु प्रणवे अकारे प्रणवः स्थितः ॥**

अत एवैतस्य महिमानं वर्णयति—

**किन्तस्य बहुभिर्मन्त्रैः किन्तस्य बहुभिर्जपैः ।**
**नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥**

अपरमपि वैष्णवलक्षणमुक्तम् यथा—

**श्रीमदष्टाक्षरं मन्त्रं मन्त्ररत्नयुगाह्वयम् ।**
**गीतासु चरमं श्लोकं यो जानाति स वैष्णवः ॥**

अपरञ्चापि—

**गुरुवक्त्राद् विष्णुमन्त्रो यस्य कर्णे विशत्यलम् ।**
**तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥**

जीवानां बन्धकभूतानि त्रीणि कर्माणि सन्ति — 1- सञ्चित, 2-प्रारब्ध 3- क्रियमाणानि । तत्र सञ्चितं पुण्यं पापं क्रियमाणं पुण्यं पापञ्च । परमात्मा शरणागतिसमये नाशयति । प्रारब्धं कर्म द्वि-विधम्— अभ्युपगतमनभ्युपगतञ्चेति, द्विविधमपि शरणागतिद्वारा नाशयति ।

परमात्मा (किं वा शरणागतिरेव नाशयति ?) शरणागत्यनन्तरं जायमानं पापं च ज्ञाताज्ञाताभ्यां परमात्मा प्रायश्चित्ताऽभावे कठोर-दण्डं विधाय रोगादिरूपेण इहैव नाशयति । वस्तुतश्शरणागत्यनन्तरं चेतनो ज्ञानपूर्वकं पापं नाचरति । लोके सर्वमेकस्मिन्नेव जन्मनि भृशं दुःखमुपभुज्य शरीरत्यागानन्तरं वैकुण्ठभुवनं गच्छत्येव । शरणागतश्चेतनो जन्ममरणमुक्तो भवति ध्रुवम् । पद्मपुराणे वैष्णव-माहात्म्यमुपवर्णितम् –

**कुलं पवित्रं जननी कृतार्था वसुन्धरा भाग्यवती च तेन ।**
**स्वर्गे स्थितास्ते पितरोऽपि धन्याः येषां कुले वैष्णवनामधेयम् ॥**

अत एवोक्तम्—

**तावद् भ्रमन्ति संसारे पितरः पिण्डतत्पराः ।**
**यावत् कुले सुतः कृष्णभक्तियुक्तो न जायते ॥**
**आस्फोटयन्ति पितरो नृत्यन्ति च मुहुर्मुहुः ।**
**मद्वंशे वैष्णवो जातः स नस्त्राता भविष्यति ॥**

इत्थमेतत् सर्वमपि वैष्णवकर्मकाण्डविषयान्नातिरिच्यते । यथा पद्मपुराणे विशिष्टवैष्णवलक्षणम्—

**ये कण्ठलग्नतुलसीनलिनाक्षमालाः**
**ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।**
**ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः**
**ते वैष्णवाः भुवनमाशु पवित्रयन्ति ॥**

## पुराणानां नामानि विभागाश्च

सात्त्विक-राजस-तामसभेदतः यथा - वैष्णवपुराणानि[1] सात्त्विक-पुराणानि । भगवतश्शिवस्य पार्वतीं प्रति वचनम् —

1. पा. पु., अ. = 236, श्लोक = 18-21 ।

1– **वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।**
**गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥**

राजसानि —

**ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।**
**भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ॥**

तामसानि —

**मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कन्दं तथैव च ।**
**आग्नेयं च षडेतानि तामसानि निबोध मे ॥**
**सात्त्विकाः मोक्षदाः प्रोक्ताः राजसाः स्वर्गदाः शुभाः ।**
**तथैव तामसा देवि ! निरयप्राप्तिहेतवः ॥**

**स्मृतीनां नामानि विभागाश्च**

स्मृतीनामपि सात्त्विकादिभेदाः —

**तथैव स्मृतयः प्रोक्ताः ऋषिभिस्त्रिगुणन्विताः ।**
**सात्त्विका राजसाश्चैव तामसाः शुभदर्शने ॥**

सात्त्विकाः —

**वाशिष्ठं चैव हारीतं व्यासं पाराशरस्तथा ।**
**भारद्वाजं काश्यपं च सात्त्विकाः मुक्तिदाः शुभाः ॥**

राजसाः —

**मानवं याज्ञवल्क्यं चाप्यत्रेयं दाक्षमेव च ।**
**कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः ॥**

तामसाः —

**गौतमं बार्हस्पत्यं च सावर्तं च यमं स्मृतम् ।**
**शाङ्खं चौशनसं चेति तामसा निरयप्रदाः ॥**

वस्तुतः शोधप्रबन्धेऽस्मिन् 'वैष्णवपुराणेषु कर्मकाण्डः' इति विषय एतदुक्तसात्त्विकपुराणादिसम्मतः सात्त्विकस्मृतिसम्मतश्च मन्यते ।

## वैष्णवसम्प्रदायाचार्याणां नामानिसिद्धान्तश्च

अनुसन्धेयविषये प्रथमोपात्तवैष्णवपदेन वैष्णवसम्प्रदाये श्रीरामानुजाचार्यः, माध्वाचार्यः, आनन्दतीर्थाचार्यः, निम्बार्काचार्यः, बल्लभाचार्यः, रामानन्दप्रभृतयश्च वैष्णवधर्मप्रवर्तकत्वेन ख्याताः सन्ति। तेषां सिद्धान्ताश्च क्रमशः विशिष्टाद्वैतः, द्वैतः, शुद्धाद्वैत इत्यादिरूपेण प्रशस्ताः, तेषां चन्दनादिधारणविषयेऽपि मिथो भेदो वर्तते।

उपासना क्रियापि च भिन्नाः भिन्नाः सन्ति। तेषु श्रीवैष्णवसम्प्रदायोद्धारकः प्रवर्तकः रामानुजाचार्य एव। परं वैदिकसरण्या पाञ्चरात्रबृहद्ब्रह्मसंहितानुसारं सम्प्रदायस्य निखिलान् संस्कारान् यज्ञयागादिक्रियाः स्वरूपाणि च प्रतिष्ठापयन् सर्वातिशायिप्राशस्त्यमभजत्। यद्यपि उक्तवैष्णवाचार्यसिद्धान्तेषु बहुत्र सामञ्जस्यमपितथापि दीक्षादिमूलसंस्कारतः आरभ्य स्वरूपधारणविषये उपासनाविषये सिद्धान्तप्रतिपादनविषये चात्र महान् भेदोऽपि (दृश्यते) तस्मादत्र वैष्णवपुराणोक्तकर्मकाण्ड इति शोधविषये तेषु प्राधान्यतमस्य सर्वप्राचीनस्य परमवैदिकपरम्परानुस्यूतस्य च श्रीवैष्णवसम्प्रदायस्यैवान्वर्थतामधिगत्यात्र तद्विषये पुराणोक्ताः वैदिकपन्थानुयायिनः सर्वशास्त्रसमर्थिताः सिद्धान्ताः संस्कारोपेताः विभिन्नयज्ञादिक्रियाश्च श्रौतस्मार्तरूपास्तदन्तर्भूताश्चान्या विशिष्टाः क्रियाः अत्र संसूच्यन्ते समीक्षणाय। तस्यैव सम्यगुहापोहेनात्रापरेऽपि वैष्णवधर्मप्रोक्ता क्रिया न विरूद्धा, परन्तु तदन्तर्गता एवेत्यवधार्य सर्वे पदा हस्तिपदे निमग्ना इति सूक्त्या विशिष्टाद्वैतसिद्धान्तीया शास्त्राभ्यर्हिता यज्ञयागादयः संस्कार विशेषाश्चात्र यथाविधि यथाशास्त्रमेवोपस्थाप्यन्ते। एषा खलूक्तिर्यद् - विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनं विनानुबन्धं ग्रन्थादौ मलं नैव शस्यत इति विषये प्रयोजनप्रकाशनमुद्रया तदारम्भः साधु मन्यते यथा— "प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते" इति

सूक्त्यात्र वैष्णवपुराणेषु कर्मकाण्ड इति विषयेऽपि केनचित् प्रयोजनेन भवितव्यमेवेति विचार्य विनिवेद्यते यत् .... "ऋचो यंजूषि सामानि तथैवाथर्वणानि च " सर्वमष्टाक्षरान्तस्थं यच्चान्यदपि वाङ्मयम्[1] इति वचनेन सर्ववैष्णवपुराणेषु विष्णुप्रीतावेव सर्वकर्मणां न्यासः। श्रौतस्मार्तप्रभृतिविविधयागादिसंस्काराणां च दृश्यते । सर्वमेतद्धि शरणागतिविद्याधीनं फलञ्चापि नारायणाभिधपरब्रह्मप्राप्तिरित्येव । परब्रह्मप्राप्तावेवोक्तवैष्णवपुराणानि वैष्णवत्वपात्रतासाधकविधि-प्रयोजकानि । साधकानां पथि सा नवधा भक्तिः परं साधनं, तत्रैवाङ्गतया सूक्ष्मस्थूलविधिना सर्वेषां श्रौतस्मार्तयज्ञप्रभृतीनां विनियोगो वैष्णवैः क्रियते । न हि परमार्थतो वैष्णवो मनागपि विष्णोः प्रीतिविरहितं कर्मसु प्रवृत्तो भवति । भवति चेन्न स वैष्णवः। तस्मादेव वैष्णवाः सवासनाः सकामनाः क्रिया न समारभन्ते । तदैव परमा भक्तिः प्रेमस्वरूपा भक्तिः विष्णोः प्रीतिकरी भवति । उक्तं चापि[2]—

**यथा देवे पराभक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥**

एतेन वैष्णवाः यथार्थतो गुरुनिष्ठा आचार्यपरम्परायामप्युवास्य भावा विष्णविव प्रवर्तमाना भवन्ति । यतो हि-

**मन्त्रे तद् देवतायाञ्च तथा मन्त्रप्रदे गुरौ ।**
**त्रिषु भक्तिः सदा कार्या सा हि प्रथमसाधनम् ॥**

एतस्मादेव हेतौ वैष्णवपुराणेषु कर्मकाण्डविमर्शनात् पूर्वं वैष्णव-पदार्थविवेचनमावश्यकमेव तद्विवेचिते सति तत् पुराणोक्तकर्मकाण्ड-विवेचनं महन्महत्त्वाय कल्पते । सर्वोऽपि कर्मकाण्डविषयः विष्णु-भक्तिपर एवेति वैष्णवविदुषां सम्मतः । अद्यापि विष्णुपूजाविधिः

1. बृ. हा., 3/45.
2. श्वेता० 6/2.

दक्षिणोत्तरभारते च यथासम्भवं यज्ञसम्पादनपुरस्सरमेव प्रायः प्रवर्तते । भगवान् न केवलं वैष्णवैरेवोपास्यः, परन्तु सर्वसम्प्रदाय-निष्ठैरपि सदोपास्यः यतः स एव लोकनियामकः उक्तः । यथा विष्णुर्नारायणः साक्षादिति सूक्त्या निखिलब्रह्माण्डाधिपतिः सकल-चराचरजगत्स्वामी वा सम्पूर्णस्य ब्रह्माण्डस्य सर्गस्थितिप्रत्यवहार-हेतुतया निमित्तोपादानकारणतया वा विभिन्नैश्शास्त्रकारैरपि भूरिशः सादरं स्मृतः सनातनपुरुष इत्यत्र न कश्चन विवादावसरप्रसर इति ।

इत्थमुक्तयुक्तेः तत आगतः तत्र भवः तस्येदं सर्वमिति चेति नानाव्युत्पत्या वैष्णवत्वेन सर्वे पदार्थाः सर्वे जडचेतनमयाः प्राणिनश्च नैकशास्त्रप्रवर्तकैराचार्यैः समादृता इत्यधिगम्यैव वैष्णवा विष्णुतो लब्धजन्मानः विष्णुत आगता भुवनेषु, विष्णौ वा भवा वैष्णवाः, य आत्मनि तिष्ठन् यस्यात्मा शरीरं यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरमित्यादिश्रुतिप्रमाणात्, चिदचिन्मयविग्रहे परमात्मनि गृहीत-मर्त्यदेहा वैष्णवा एव वस्तुतो नान्याः । मनुस्मृतावपि

**अप एव ससर्जादौ तासु बीजमवासृजत् ।**
**तदण्डमभवद्धैमं कोटिसूर्यसमप्रभम् ॥**

इत्यादिवचनमपि प्रोक्तश्रुतौ यस्य पृथिवी शरीरमिति पदं सर्वमहाभूतोपलक्षणतयाऽधिगम्य विष्णोः व्यापकतानिमित्तोपादान-कारणतया चापि सुप्रथितैव सर्वप्राणिनामाधारता स्रजनता, रक्षकता संहारकता चेति, यथोक्तमपि—

**नारायणः परं ब्रह्म तत्त्वं नारायणः परः ।**
**नारायणः परं ज्योतिरात्मा नारायणः परः ॥**
**यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥**

नैतावताऽलम्, परन्तु नारायणोपनिषद्यपि —

**अथ पुरुषो ह वै नारायणोऽकामयत् प्रजाः सृजयेदिति ।**
**नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च खं वायुः ॥**

ज्योतिरापः पृथिवी विश्वस्य धारिणी नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते, नारायणादिन्द्रो जायते, नारायणाद् द्वादशादित्या रुद्राः वसवः सर्वाणि छन्दांसि, नारायणादेव समुत्पद्यन्ते, नारायणात् प्रवर्तन्ते, नारायणे प्रलीयन्ते एतादृग् ऋग्वेदशिरोऽधीते । एतत् सर्वं हि नारायणस्य परं विभु विभवान्तर्याम्यर्चावतारान् प्रमाणयत्येव सुतराम् । तेनेदं जगदखिलं प्रवर्तयन्नसौ नारायणः स्वयं काले काले समवतरति भुवि । यथा च गीतायामपि—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**

तेन शक्तिमता नारायणेन सह तस्य शक्तिः लक्ष्मीरपि समवतरति । यथोक्तं विष्णुपद्मपुराणादिष्वपि—

**राघवत्वेऽभवत् सीता रुक्मणी कृष्णजन्मनि ।**
**अन्येषु चावतारेषु लक्ष्मीत्वेषाऽनपायिनी ॥**

विष्णोरेषाऽनपायिनी इत्यपि वचनम् ।

उक्तानुसन्धेयविषये प्राथम्येनोपात्तवैष्णवपदार्थनिरूपणप्रसङ्गे विष्णु-सम्बन्धित्वं लोकप्रमुखतया विद्यते । तत्र च वैष्णवत्वं श्रियमन्तरा न शास्त्रे लोकप्रथानियामकम् । यतो हि वैष्णवपदार्थप्राधान्येषु श्रीरेव प्रथमा प्रधाना भूमिः । तस्मादेव श्रीसम्प्रदायत्वेन व्यवहारो वैष्णवेषु समभ्यर्हितः । विष्णुसम्बन्धितया प्राणिनां प्रशस्तान् व्यवहारान् कल्याणाय प्रबोधयन्तो वैष्णवपुराणग्रन्थाः परमोपयोगिभाजः सन्ति । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति वचनेन वेदबोधिता केषु कर्मसु निखिलपुराणेषु सात्त्विकपुराणान्येव वैष्णवपुराणतया प्रथितानि । वेदे च कर्मकाण्डं, उपासनाकाण्डं ज्ञानकाण्डमिति त्रिविधं काण्डं समामनन्ति तत्त्वज्ञाः । त्रयाणामपि काण्डानां विनियोगो विष्णुप्रीतौ विभिन्नप्रक्रियाभिः कृतः । लोकेऽपि ब्रह्मचर्याश्रमानन्तरं गृहस्थाश्रमे सर्वाणि कर्माणि पत्न्या सहैव सम्पादयितुं विहितानि । यानि तानि न

निर्मूलानि निराधाराणि, परन्तु यथा सर्वे शास्त्रानुकूलव्यवहाराः सनातनाः ईश्वरप्रवर्तितास्तथा सशक्तिकाः (सपत्नीकाः) गार्हस्थ्य-मुपेता जना कर्म कुर्युरिति प्रथामपि सनातनीं प्रस्तोतुं समर्थितुं चारितार्थ्यञ्चेति भगवती विष्णोर्महिषी लक्ष्मी देवी चापि विष्णो-रवतारबेलायां समवतरति लक्ष्मीः पद्मालया पद्मा कमला श्रीः हरिप्रिया । इन्दिरा लोकमाता मा क्षीरोदतनया रमा[1] ।

**अथ मे कृणतः क्षेत्रं लाङ्गलादुत्थिता ततः ।**
**क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता[2] ।।**

जगति जीवा वनपरायणा भगवती लक्ष्मी श्रीरिति पदाभिधा वैष्णवपुराणे सत्सम्प्रदायख्यातिमभजत् । धर्मार्थकाममोक्षेति चतुर्धा विभक्तेषु पुमर्थेषु मोक्षः परमपुरुषार्थ एव जीवनग्रहणस्य प्रमुखं प्रयोजनमिति सर्वशास्त्रसारः । सन्ति मोक्षस्वरूपाणि सुलक्षितानि विभिन्नशास्त्रकारैः, अत्र तु विष्णुपुराणसम्मतमेव मोक्षपदार्थं जीवनोद्देश्यतया समुपबृंहयन् वैष्णवो जनः स्वस्य जगति प्रवृत्ति-निवृत्योः प्रशमनमेव परमन्तपः मनुते । किं बहुना परमभागवतो जनस्तु मोक्षमपि न कामयते भगवद्भागवतसेवातिरिक्तं क्षणमपि । वैष्णवपुराणत्वे पुराणानि सात्त्विकानि प्रोक्तान्येव ।

एवमुपपुराणान्यपि गुरुडप्रभृतीनि सन्ति । तेषु भौतिकाऽऽ-ध्यात्मिकप्रोन्नत्यै विविधोपायाः वर्णिताः सन्त्येव । तथा सति लब्धजन्मनां विभिन्नाः कर्मभूमयः, तत्र कर्मस्वपि श्रौतस्मार्ताभिधा यज्ञा अपि विभिन्नाः संस्काराश्च निष्कामनया कर्त्तव्यबुद्ध्या भगवतः समर्पणभावेनैव विहिता वैष्णवेभ्यो विस्तरशः । प्रथमं तत्तत् कर्मकर्तृत्वपात्रतासिद्ध्यै वैष्णवपुराणेषु स्वस्मिन् वैष्णवत्वाधानायापि

---

1. अमर० ।
2. वा० रा० ।

सत्संस्कारश्शारणागतिपदाभिधोऽभिहितः कर्मकाण्डबीजभूतः प्रतिष्ठितः, तदनन्तरमेव भगवद्भागवतसेवाबुद्ध्यैव सकलकर्म-सम्पादनाधिकारी भवति वैष्णवो जनः। तस्मादत्र तादृशः संस्कारः प्राधान्येनाभिधातुं योग्यः, सोऽपि पद्मपुराणानुरोधेनोमामहेश्वर-संवादरूपेणात्र समुदाह्रियते याथार्थ्यं निरूपणाय। तथा हि—

पार्वत्युवाच—

देव देव महादेव त्रिपुरघ्न सुरेश्वर।
विष्णुभक्तिं मयाऽऽचक्ष्व मुक्तिदां सर्वदेहिनाम्॥
उपास्यभेदान् मन्त्रश्च तत्तत्पूजाविधीस्तथा।
तस्य विष्णोः स्वरूपञ्च तद्विभूतिगुणादिकम्॥
तस्य लोकस्वरूपञ्च यं प्राप्य न निवर्तते।
सर्गस्थितिलयं येन करोति भगवान् हरिः॥
यद् गत्वा न निवर्तन्ते तद्धाम परमं हरेः।
येन केन च कृत्येन साधनेन परं पदम्॥
प्राप्नुवन्ति नराः पापा विषयासक्तचेतसः।
विस्तरेण मयि प्रीत्या ब्रूहि सर्वमशेषतः॥

श्रीरुद्र उवाच —

साधु साधु महादेवि! सर्वलोकहितैषिणी।
साधु पृच्छसि मां देवि! श्रीशमाहात्म्यमुत्तमम्॥
धन्यासि कृतपुण्यासि[1] विष्णुभक्तासि पार्वति।
परितुष्टोऽस्मि ते भद्रे! शीलरूपगुरुः सदा॥
अद्य वक्ष्यामि गिरिजे! भगवद्भक्तिमुत्तमाम्।
तन्मन्त्राणां विधानञ्च स्वरूपंतस्य शार्ङ्गिणः॥
तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः।
परमात्मा परं ब्रह्म परं ज्योतिः परात्परः॥

---

1. पद्मपुराणोत्तरखण्ड, 224/1-6

यज्ञो यज्ञपतिः साक्षाद् ब्रह्मणः पतिरेव च ।
तस्य लोकप्रधानस्य जगन्नाथस्य पार्वति ।
माहात्म्यं वासुदेवस्य यच्छक्यं तद् ब्रवीमि ते ॥
अशक्यं तन्मया वक्तुं ब्रह्मणा सह देवतैः ।
सर्वोपनिषदामर्थे वेदान्ते परिनिश्चितम् ॥
तस्योपासनभेदाश्च शृणु वच्मि पुनः पृथक् ।
आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः ॥
धारणं चोर्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः ।
अर्चनं च जपो ध्यानं तन्नामस्मरणं तथा ॥
सर्वेषामेव देवानां ममापि पुरुषोत्तमः ।
पूजनीयो हरिर्नित्यं ब्राह्मणानां विशेषतः ॥
तस्मात्तु ब्राह्मणो नित्यं विधिवत् पूजयेद्धरिम् ।
तच्चिह्नैरङ्कितः श्रीशपदं प्राप्नोत्यसंशयम् ॥
शङ्खचक्राङ्कनं कुर्याद् ब्राह्मणो बाहुमूलयोः ।
हुताग्निनैव सन्तर्प्य सर्वपापापनुत्तये ॥
चक्रं वा शङ्खचक्रेण तथा पञ्चायुधानि वा ।
धारयित्वैव विधिवद् ब्रह्मकर्म समारभेत् ॥
अग्नितप्तं पवित्रं च धृत्वा वै भुजमूलयोः ।
त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् ॥
चक्रचिह्नं विहीनस्तु यः पूजयति केशवम् ।
तत्सर्वं विफलं याति पूजामन्त्रजपादिकम् ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अङ्कयित्वा जपन् मन्त्रं संसारान्मोक्षमाप्नुयात् ॥
सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
तपनीयविधानेन पश्चात् कर्मसु योजयेत् ॥

सर्वसंस्कारेषु प्रधाने षोडशी कर्मणि । श्राद्धे पितृणां तरणाय महानुपदेशोऽत्राणविष्णुचक्रविहीनन्तु यः श्राद्धे भोजयिष्यति व्यर्थं भवति तत्सर्वं निराशा पितरो गताः ।

विष्णुचक्राङ्कितं विप्रं पूजयेच्छ्राद्धकर्मणि ।
विष्णुचक्रविहीनन्तु यत्नेन विवर्जयेत् ॥
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ।
तस्य तीर्थानि यज्ञाश्च सम्प्राप्ता नात्र संशयः ।
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ।
न तस्य किञ्चिदश्नीयादपि क्रतुसहस्त्रगः ॥
शङ्खचक्रधरो देवो हरिपूज्यो यथाऽऽत्मभिः ।
तथैव सर्वैः सम्पूज्यो विप्रश्चक्रादिचिह्नितः ॥

किमधिकम् —

प्रकृतिस्पर्शरहितो वासुदेवो जनार्दनः ।
तथैव ब्राह्मणो देवि ! विष्णुचक्रेण चिह्नितः ॥
तस्मात् प्रकृतिसंसर्गपापौघदहनं हरेः ।
प्रतप्तं विभृयाच्चक्रं शङ्खं च भुजमूलयोः ॥
स्त्रीशूद्राणां सदा धार्यं चन्दनेन सुगन्धिना ।
बाहुमूले लिखेच्चक्रं तप्तन्तु ब्राह्मणस्य वै ॥

एवं च श्रौतस्मार्तकर्म कर्तुमपि वैष्णवत्वाधिकारसिद्ध्यर्थं चक्राङ्कनं विहितम् । यथा—

तप्ते नैवाङ्कनं कुर्याद् ब्राह्मणस्य विधानतः ।
श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥

सर्वाश्रमवासिनां विशेषतः ब्राह्मणानां च विष्णुचक्राङ्कनं गार्हस्थ्योपयोगिशास्त्रविहितकर्मसम्पादनार्थमत्यावश्यकमित्यपि भगवता महेश्वर प्रत्यपादि । यथा ब्राह्मणा मन्त्रसिद्ध्यै च ज्ञानसिद्ध्यै च मुक्तये—

अप्राकृतो महात्मानो विष्णुचक्रेण लाञ्छिताः ।
विष्णुचक्रविहीनास्तु ब्राह्मणाः प्राकृताः स्मृताः ॥

सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः ।
विधिना वैष्णवं चक्रं धार्यं श्रुतिनोदनात् ॥
एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ।
तथैव साम्नि यजुंषि ऋचि प्रोक्तं शुभानने ॥

यथा अतप्ततनूर्न तदामोऽश्नुते शृतासः इद्वहन्तस्तत् समासत (इत्यापस्तम्बशाखायां प्रोक्तम् - यथा ऋग्वेद अष्ट० 7/3/8/9 अनु०.)[1] पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः, अतप्ततनूर्न तदामोऽश्नुते मृतासः - इत्यादि । अग्रेऽपि चक्रधारणविधिः समस्तपरिवारजनकृते प्रोक्तः । यथा—

अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषु समङ्कयेत् ॥
इत्येवं श्रुतयः सर्वा कथयन्ति वरानने ।
तथैव सेतिहासेषु पुराणेष्वपि कथ्यते ॥

इति भगवन्महेश्वरवचनप्रामाण्येन विष्णुः प्रोक्तायुधधारणेन वैष्णवत्वं सन्धार्य सर्वकर्मसु लब्धाधिकारः श्रौतस्मार्तकर्मानुष्ठाने पूर्णाधिकारी मन्यते ।

एवमूर्ध्वपुण्ड्रधारणविषयेऽपि विधिः प्रोक्तो महेश्वरेण । यथा—

ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे ।
लक्ष्म्या सार्धं समासीनो देवदेवो जनार्दनः ॥
तस्माद् यस्य शरीरे तु ऊर्ध्वं पुण्ड्रं धृतं भवेत् ।
तस्य देहं भगवतो विमलं मन्दिरं शुभम् ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
धारयेदूर्ध्वपुण्ड्रं यो मृदा शुभ्रेण वैष्णवः ॥
यज्ञदानतपश्चर्या जपहोमादिकञ्च यत् ।
ऊर्ध्वपुण्ड्रधरः कुर्यात्तस्य पुण्यमनन्तकम् ॥

---

1. पा० पु०, 225/ 1-3 ।

विप्राणामूर्ध्वपुण्ड्रं स्यात्तिलकन्तु महीभृतः ।
पट्टाकारन्तु वैश्यानां शूद्राणां वै त्रिपुण्ड्रकम् ॥
ऊर्ध्वपुण्ड्रन्तु सर्वेषां न निषिद्धं कदाचन ।
धारयेत् क्षत्रियाद्योऽपि विष्णुभक्तो भवेद् यदि ॥

इत्थं शङ्खचक्रधारणविधिः तदनु ऊर्ध्वपुण्ड्रधारणविधिः तदनु नारायणमन्त्रदीक्षाविधिः वैष्णवनामकरणसंस्कारविधिश्च वैष्णवत्व-सिद्ध्यै चेति सर्वं समीचीनं भवति । किमधिकं वक्तव्यम् — एतदपि विहितं वर्तते यद् धर्मार्थकाममोक्षचतुर्विधपुरुषार्थेष्वपि तावत् साफल्यं वास्तविकं न लभ्यते । तत्रापि मोक्षोपायतया लोके दीक्षाविधिश्च यो हि प्रचलितः सोऽपि वैष्णवपुराणेषु परिष्कृत एव वर्णितः, यथा—

शङ्कर उवाच—

न्यासे वाऽप्यर्चने वापि मन्त्रमेवान्तिमः श्रयेत् ।
अवैष्णवोपदिष्टेन मन्त्रेण न परा गतिः ॥
अवैष्णवोपदिष्टं चेत् पूर्वं मन्त्रवरं द्वयम् ।
पुनश्च विधिना सम्यग् वैष्णवाद् ग्राहयेद् गुरोः ॥
सहस्रशाखाध्यायी वा सर्वयज्ञेषु दीक्षितः ।
कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥

तस्मादेव स विधिर्यथा—

चक्रेण विधिना तप्तं ताप इत्यभिधीयते ।
पुण्ड्रमूर्ध्वं तथा प्रोक्तं नाम वैष्णवमुच्यते ॥
ततो मन्त्रविधानेन शिष्यमध्यापयेत् गुरुः ।
न्यासमष्टाक्षरं मन्त्रं वा वैष्णवं मनुम् ॥
न्यासविद्यापरो यस्तु ब्राह्मणश्रेष्ठ उच्यते ।
न्यासात् परतरं नास्ति मन्त्रं सत्यं ब्रवीमिते ॥

मन्त्रो हि श्रीमदष्टाक्षरः, तस्य ऋषिरपि नारायण एव देवतापि स एव तस्मादयं मन्त्रः, सर्वमन्त्रेषु प्रधानः यतोऽन्ये मन्त्रा ऋषिप्रणीता प्रोक्ता वा न नारायण ऋषिः स्वयं परन्तु देवतैव । नारायणमन्त्रस्य तु ऋषिरपि देवतापि एवमुक्ता बहुभिर्प्रमाणैर्विधिः । वैष्वणाः विष्णुपरायणाः सर्वसंस्कारानुष्ठाने गृहीतव्रता श्रौतस्मार्तप्रभृतिसकलकर्मसम्पादने विधिवत् पात्रतामधिगताः मन्यन्ते । तदर्थमेव वैष्णवपुराणेषु कर्मकाण्डविषयोऽन्यपुराणोदितकर्मकाण्डापेक्षयाऽन्यधर्मशास्त्रोदितकर्मकाण्डापेक्षया च महत्त्वातिशयं बिभर्ति । सर्वकर्मणां परिसमाप्तिर्हि भौतिकोत्थानपुरस्सरमध्यात्मिकोत्थानपर्यन्तं तद्द्वारा च निःश्रेयसाधिगमः बहुप्रयाससाध्यः परं वैष्णवपञ्चसंस्कारविधिना सारल्येन निःश्रेयसाधिगमः, स च पञ्चसंस्कारः —

**तापः पुण्ड्रः तथा नाम मन्त्रो याग एव च ।**
**अमी पञ्चैव संस्काराः परमैकान्तिहेतवः ॥**

अन्यच्चापि—

**मातापितरौ सृजतः शरीरमेव केवलम् ।**
**आचार्यशिष्यं तु या जाति सा सिद्धा साऽजरापरा ॥**

इति बृहद्ब्रह्मसंहितावचनप्रमाणेन पञ्चसंस्कारसम्पन्नाः जीवाः (मानवाः) सर्वकर्मसु लब्धाधिकाराः मन्यन्ते । तेन सर्वसंस्काराणां सर्वकर्मणाञ्च बीजभूतः पञ्चसंस्कारो विधेयः - एवेति भगवतो महेश्वरस्यापि महानुपदेशः । यतो हि कर्मकाण्डस्य प्रारम्भः पञ्चसंस्कारमुखेनैव भवति । वैष्णवपुराणानुसारं पञ्चसंस्कारविधिज्ञो हि सर्वाविधसंस्कारान् कर्माणि श्रौतस्मार्तयज्ञादींश्च विधानं च कर्तुं पूर्णाधिकारी । यो बीजभूतं कर्मकाण्डसंस्कारं वा न वेत्ति स कथं तन्मूलकविभिन्नेहलौकिकपारलौकिकसाधनीभूतयज्ञान् कर्तुं

प्रभुः ? अतः पञ्चसंस्कारविधिज्ञो हि परस्ताच्च विष्णोर्नित्यं प्रीतिकरं कैङ्कर्य्यं कर्तुं पारयति । यद्यपि विष्णोः प्रीतिकराणि कर्माणि सन्त्यन्यान्यपि तथापि तानि प्रीतिकराणि एव, न नित्यहृद्यानि नित्यप्रीतिकराणि मन्यन्ते । अकरणान्मन्दकरणं श्रेय इति वचनानुसारं जगतो विषमरूपत्वाद् विषमकर्मक्षेत्राच्च त्रयस्त्रिंशदुत्तरकोटि-संख्याक देवताप्रतिपादनाच्च कर्मणां यज्ञानां विविधसंस्काराणां तावन्तीनां देवतानां प्रसादनाय वेदशास्त्रोपदेशाच्च , नैव कर्मसु समानता कथमपि नैवाराधनं यज्ञादिसम्पादनक्रियाश्च समानाः । अत एव विषमतेयं लोके सार्वत्रिकी स्वभाविक्येव । परं वेदनामुप-बृंहितवचनं पुराणेतिहासादिभिः सत्यं यथा तथा तत्र तत्र पुराणेष्वपि सात्त्विक-राजस -तामसभेदोऽपि तथाविधफलप्रसूत्यैव यथार्थ एवेति समवधार्य वैष्णवपुराणोक्तकर्मकाण्डविषया महान्तो विमर्शितव्या एव । प्रायो वैष्णवपुराणेषु भागवता धर्माः भगवच्छरणागतिश्च सुप्रति-पादिताः । किं बहुना सर्वोपनिषद्‌दूतगोः सकाशात् प्रादुर्भूत-गीतामृतगाथायामपि दोग्धा गोपालनन्दनो भगवान् श्रीकृष्णो गीताचार्यः स्वयं प्रोवाच—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥**
**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥**

वैष्णवपुराणोक्तसर्वविधसिद्धान्तज्ञानं प्राप्य लब्धशरणागतिजीवो न पुनर्भवाय कल्पते । यथा—

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति ते[1] ॥**

---

1. श्रीमद्भगवद्गीता, 14/2 ।

लोकयात्रायां योगक्षेमं निर्वाहं तु वैष्णवानां स्वयं भगवान् वासुदेवः करोति । तस्मात्तदर्थचिन्ता तु न कदापि कार्या वैष्णवैः । यथा—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

इति वचनाच्छरणागतानां प्राणिनां स्वकर्तव्यत्वेन भगवत्सेवा-सम्बन्धे शरणागतिविषये महाभारतेऽपि भगवता वेदव्यासेन प्रोक्तम् । यथा—

सत्यं ब्रवीमि परलोकहितं ब्रवीमि
सारं ब्रवीम्युपनिषद्हृदयं ब्रवीमि ।
संसारमुल्वगमसारमवाप्य जन्तोः
सारोऽयमीश्वरपदाम्बुरुहस्य सेवा ॥

भागवतपुराणेऽपि, यथा—

तावद् रागादयस्तेषां तावत् कारागृहं गृहम् ।
तावन् मोहाङ्घ्रिनिगडो यावत् कृष्णस्य न ते जनाः ॥

वैष्णवपुराणोक्ताःसंस्काराः यज्ञकर्मणि च परमवैदिकान्येव । तस्माद् वैष्णवानां यज्ञयागादिसमस्तानि कर्माणि कामवासना-विरहितानि विष्णोः प्रीत्यर्थं समुपासितानि जायन्ते । तथा सति यथा-शास्त्रमेव वैष्णवाः कर्म समाचरन्ति । येन वैष्णवाः विष्णु-पुराणोक्तानि कर्माणि कुर्वन्त एव जीवनं धन्यं मन्यन्ते । न तु कर्म विहाय केवलं भजनकीर्तनमेव प्रधानं कर्म स्वीकुर्वन्ति प्रत्युत यथाविधिकर्मसम्पादनं भगवद्-भागवतसेवाबुद्ध्या स्वरूपानुरूप-मेवानुभवन्तः कर्मसु प्रवृत्ता दृश्यन्ते ।

तथा कर्माचरणेन को लाभः ? इति विषये सूक्तिरियं प्रमाणभूता—

कुलं पवित्रं जननी कृतार्था
वसुन्धरा भागवती च तेन ।
स्वर्गस्थितास्ते पितरोऽपि धन्याः
येषां कुलं वैष्णवनामधेयम् ॥

स्वयं भगवान् विष्णुरपि वामनो भूत्वा पञ्चसंस्कारं विधायाऽऽत्मानं संस्कारयामास । यथा भागवतपुराणे कथा प्रसिद्धा—

अत्र हि नारायणपञ्चरात्रे, बृहद्ब्रह्मसंहितायाः पाद-2, अ.=7 वचनं प्रमाणम् —

धारयिष्ये भुजे दिव्यं बह्निपूतं सुदर्शनम् ।
वटुको वामनो भूत्वा मेखलाजिनदण्डधृत् ॥
काश्यपादङ्कयित्वाङ्गं करिष्ये देवरक्षणम् ।
विशिष्टमुनिशार्दूलाः दिलीपप्रमुखाः नृपाः ॥
धारयिष्यन्ति भूलोके महाशस्त्रं सुदर्शनम् ।
रामो राजीवपत्राक्षो भूत्वा दशरथात्मजः ॥
धृत्वा तप्तायसीं मुद्रां देवकार्यं करिष्यति ।
परमैकान्तिकं धर्मं वायुपुत्रो महाबलः ।
प्रवक्ष्यति मेधावी भक्तेभ्यो भक्तवत्सलः[1] ॥

श्रीमद्भागवतपुराणेऽपि वचनानि महान्ति सन्ति । यथा—

कालेनाच्छादितो धर्मो मदीयोऽयं वरानने ।
तदा मया प्रवृत्तोऽयं तत्कालोचितमूर्तिना ॥
विष्वक्सेनादिभिर्भक्तैः शठारिप्रमुखैर्द्विजैः ।
रामानुजेन मुनिना कलौ संस्थामुपेष्यति ॥
तैलङ्गा द्राविडाश्चैव दयावन्तो जनाः भुवि ।
पञ्चक्रोशे तु विधिना आचारः विविधाः स्थिताः ॥

---

1. बृहद्ब्रह्मसंहितायाम् ।

कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥
क्वचित् क्वचिन् महाराज द्राविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥
कावेरी च महापुण्या प्रतीची च महानदी ।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वरः ॥
प्रायो भक्ताः भविष्यन्ति वासुदेवेऽमलाशयाः ।
द्राविडेषु महापुण्यं श्रीरङ्गाख्यनिकेतनम् ॥
शिलारूपेण तिष्ठामि यत्राहं कमलाप्रिये ॥

—कुलार्णवतन्त्रे

इत्थं विष्णुधर्मप्रवर्तकपुराणेषु भागवतपुराणेऽपि विष्णोरष्टविध-प्रतिमा विद्यते । सा च प्रतिमा वैष्णवपुराणोक्तकर्मकाण्डविधिनैव सुप्रतिष्ठापयितुं शक्यतेति धिया कर्मकाण्डविषयोऽत्रत्योऽतिगहन एव । अष्टविधप्रतिमाविषये यथा भागवते (11/27/12)—

शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधाः स्मृताः ॥

एतावता प्रबन्धेन वैष्णस्वरूपं वैष्णवानां पञ्चसंस्कारविद्यास्वरूपम् सकलकर्मकाण्डनिदानभूतं पञ्चसंस्कारविषयकं प्रमाणञ्च निरूपयितुं फलञ्च भगवत्प्राप्तिरूपमुक्तमत्र । प्रकृतमनुसरामः उक्तशोध-प्रबन्धे पञ्चाध्यायात्मके गृहीतविषयाः कर्मकाण्डाङ्कुरप्ररोहणदिशा वैष्णवपुराणेषु यथास्थलं निर्दिष्टा कर्मकाण्डभूमयः सङ्केतिताः समासत इति प्रस्तूयते । यथा प्रतिष्ठाविधौ —

पाञ्चरात्र्यस्य कृत्स्नस्य प्रसूतिं सूतिवर्जितम् ।
रमावक्त्राब्जरोलम्बं महः कश्चिदुपास्महे ॥

-पञ्चरात्रीयसिद्धान्तज्ञानमावश्यकं भवेत् । प्रतिष्ठाकर्मणः पूर्वमत-स्तदुपदर्श्यते । महता सन्दर्भेण महाभारते शान्तिपर्वणि नारायणीये

भगवता पाराशर्य्येण प्रतिपादितम् । तदधिष्ठाय पाञ्चरात्रीयेश्वर-संहितायामपि प्रोक्तम् । यथा —

इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
नारायणमुखोद्गीतं नारदोऽश्रावयत् पुनः ।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः ॥
एष एकायनो वेदः प्रख्यातः सर्वतो भुवि ।
दुर्विज्ञेयोऽदुष्करश्च प्रतिबुद्धेर्निषेधितः ॥

अत्र पाञ्चरात्रस्यैवैकायनशब्देन निर्देशं कृत्वा मोक्षायनायेति सन्दर्भे-णोपबृंहणतया पुराणानां वेदार्थप्रतिपादकतया तत्रापि च सात्त्विक-पुराणानां तत्र प्रोक्तं विष्णुप्रीतिकारिणां कर्मणाञ्च महत्त्वातिशय-मधिगम्य मानवानां मुख्योद्देश्यसम्पादकत्वेन लोके तदीयाराधनं धन्यं मन्वते वैष्णवाः ।

तस्मादेव निस्सर्गतो हि सर्वोपासनापेक्षया सर्वकर्मसम्पादनापेक्षया च विष्णोरुपासना विशिष्यते । विद्यमानास्वपि विविधोपासनासु विशेषतः कलौ भगवतो विष्णोरर्चा विग्रहोपासना सर्वथा महत्त्वं बिभर्ति । अत एवोक्तम् —

आद्यमेकायनं वेद सद्ब्रह्मप्रतिपादकम् ।
तेनैव संस्कृता विप्राः मुख्यकल्पाधिकारिणः ॥
यथैव दीक्षणीयेष्ट्या जायन्ते ब्राह्मणादयः ।
तथैव दीक्षाविधिना जायमाना यथोदिताः ।
पूजाविधौ भगवतः प्रकल्पन्तेऽधिकारिणः ॥

तच्चतुर्धा ग्रथितं शास्त्रमित्यादिव्याख्यानविस्तृतमिहोपन्यस्तु-मशक्यम् —

एकैव मूर्तिराराद्ध्या प्राधान्येनेतराः पुनः ।
देव्यः श्रियादयश्चापि सम्पूज्याः परिवारवत् ॥
आयुधैश्शङ्खचक्राद्यैः श्रीवत्साद्यैश्च भूषणैः ॥

इत्थमेतेन वचनेन विष्णोराराधनं प्राधान्येन प्रमाणीकृतमेवेत्यत्र न सन्देहलेशः । पाद्मतन्त्रेऽपि ब्रह्मणो वचनम्, यथा —

व्यापिनो देवदेवस्य प्रतिष्ठा कीदृशी मता ।
भगवन् संशयानस्य मम निश्चयतो वद ॥

श्रीभगवानुवाच—

सर्वस्य भूतजातस्य हरिरात्मा स्थितोऽपि सन् ।
मन्त्रवीर्याच्च माहात्म्यात् स्थापकस्य गुरोस्तथा ॥
प्रतिमायां प्रकर्षेण सन्निधत्ते हरिः स्वयम् ।
कामानशेषानत्रैव हरिमर्थंते जनाः ॥
तेन प्रतिष्ठा नामेयमन्वर्थं वर्तते भुवि ।
यथा च वह्निं दहनो न हन्ति व्याप्य तिष्ठति ॥
अरणीमथनाद् भूयो जायमानः प्रदृश्यते ।
दहनादीनि कार्याणि करोति च यथायथम् ॥
तथा सर्वगतो विष्णुरदृश्यः प्राकृतैर्जनैः ।
दृश्यते च प्रतिकृतौ मन्त्रिणौ मन्त्रगौरवात् ॥
तस्मात् सर्वात्मना विष्णुः प्रतिष्ठाप्याभिपूजयेत् ।
शिल्पिभिः निर्मिते बिम्बे शास्त्रदृष्टेन वर्त्मना ॥

तस्मात् सर्वदेशकालवस्त्वपरिच्छिन्नोऽपि श्रीमन्नारायणः स्थापक-भक्तिवश्यो वा मन्त्रगौरवेण गुरुवशगतो वा प्रतिमायां प्रकर्षेण समेत्य समाश्रितानामिष्टप्राप्तिपुरस्सरमनिष्टनिवृत्तिं कुर्वाणः सर्वधुग् भवतीति । यद्युच्यते — विभोः कश्चिदवयवो हि प्रतिमासु प्राविष्टो भवतीति न तस्य निरवयवत्वात् सावयवत्वस्वीकारे च नित्यत्वापत्तिरिति तस्मात् प्रतिकार्यं प्रतिष्ठा निर्मूला इति । तत्रोच्यते

समाधिः यथा खलु दार्शनिकैः घटव्यक्तौ वर्तमानस्य विभोर्नित्यस्य घटत्वस्य सर्वावयवत्वेन व्याप्तिः स्वीकृता युक्तियुक्तश्च तथागत-स्यापि विष्णोः सर्वशः प्रतिमायां सन्निवेशः सम्भवत्येवेति । तत्र भगवत्प्रतिष्ठायाः विम्बाधीनत्वात् प्रथमं बिम्बनिर्णय उच्यते । यथा पाद्मतन्त्रे —

शालिग्रामशिलायाञ्च कर्तव्यो विग्रहो हरेः ।
पुण्यतीर्थे शुभे क्षेत्रे पुण्यपर्वतमस्तके ॥
स्निग्धं रम्यं गृहीत्वाश्म कारयेत् शुभविग्रहम् ।
सर्वावयवसम्पूर्णं लक्षणैश्च विराजितम् ।
श्रीभूम्यां समायुक्तं देवं सर्वाङ्गसुन्दरम् ॥
शास्त्रोक्तेन विधानेन कारयेच्छुभलक्षणम् ।
तारहाटकताम्रोत्थमारकूटमयं तथा ॥
एवं हि भूमयो वस्त्रपाषाणा धातवो द्रुमाः ॥

एवं पद्मपुराणे —

गृहेषु प्रतिमायाश्च न नियमः कमलासने ।
मानसैवोप्सिताः कार्याः सर्वा एव शुभप्रदाः ॥
भुजे चक्रं द्विजातीनां शिरश्चक्रञ्च दैवतम् ।
अचक्रं द्विजदेवानां पूजादानञ्च निष्फलम् ॥
तस्माच्छिरश्चक्रयुताः प्रतिमाः कार्या मनोहराः ।

प्रतिमाप्रतिष्ठापनविधौ प्रशस्तमुहूर्तोऽपि वर्णितः —

चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते ॥
पञ्चमी द्वितीया चापि तृतीया सप्तमी तथा ।
दशमी पूर्णमासी तथा षष्ठी त्रयोदशी ॥
एकादशी द्वादशी च शुक्लपक्षे शुभास्त्विमाः ।
सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ॥

एते सौम्यग्रहाः प्रोक्ताः प्रशस्ता स्थापने हरेः ।
आषाढद्वितीयं मूलमुत्तरात्रयमेव च ॥
ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदं तथा ।
हस्तोऽश्वनी रेवती च पुष्यो मृगशिरस्तथा ॥
अनुराधा तथा स्वातिः प्रतिष्ठादिषु शस्यते ।
धनुर्नक्रौ परित्यज्य सर्वे लग्नाः शुभप्रदाः ॥

इत्थं विस्तरेण प्रतिष्ठाविधिः प्रशस्तो विष्णोः प्रीतिकरो मन्यते । प्रतिष्ठाविधौ पुराणोक्ताः बहुविधाः मन्त्रा अपि प्रोक्ताः सन्ति । तत्र तत्र भूमिपूजनतः आरभ्य स्तम्भरोपणादिपुरस्सरमवटादिस्थापनं मण्डपादिनिर्माणं च तत्र कुण्डादिरचनाविधिश्च पूर्णरूपेण ध्वजादिरोपणपुरस्सरं पूर्वादिद्वारेषु विहितां सर्वमन्यदेवताप्रतिष्ठा-विधिस्तु प्रोक्तः - विधिभ्यो हि पुराणान्तरेभ्यो विशिष्यते । तत्र धान्याधिवासविधयः प्रतिमानां विशिष्टा एव । इत्थं प्रतिष्ठाविधौ प्रथमदिनकृत्यारम्भे पाद्मे आचार्यलक्षणणं क्रियापादे प्रोक्तम् —

आचार्यं वरयेत् पूर्वं तदधीना हि सिद्धयः ।
न्यूनातिरेकनिर्मुक्तः कल्याणावयवः शुचिः ॥
कल्याणहस्तः श्रुतवान् वित्तवाच्छीलवानपि ।
पञ्चकालविधानज्ञः तत्कर्मनिरतः क्षमी ॥
जितेन्द्रियः प्रभुर्धीमानूहापोहविचक्षणः ।
षट्कर्मकृत् षडध्वज्ञः षडङ्गविदलोलुपः ॥
षोडशन्यासचतुरः सौम्यसिद्धान्तभेदवित् ।
ऋजुर्दयावान् धर्मज्ञः सत्यवागिष्टकर्मकृत् ॥

अत्रोक्तपञ्चकालविधाने पञ्चकालाश्चाभिगमनोपादानेज्या-स्वाध्याययोगाख्यानि या पाञ्चरात्ररक्षादिभ्योऽभिमतानि तत्र षडध्वम(ध्वान)भेदेन भुवनाध्वा, पदाध्वा, मन्त्राध्वा, तत्त्वाध्वा,

कालाध्वा, वर्णाध्वा इति तेषां विशेषः । एवञ्च

सर्वापवादनिर्मुक्तः सर्वकल्याणलक्षणः ।
सर्वव्याधिविनिर्मुक्तो दीक्षितश्चक्रमण्डले ॥
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथवा भवेत् ।
अधिकारी भवेदेष यथोक्तगुणभाजनः ॥

इति आचार्यलक्षणं प्रोक्तम् ।

एवमेव सर्वगुणैः समुदिताश्चान्येऽपि ऋत्विजप्रभृतयो वर्णिताः —

आचार्येण यथोक्तेन ऋत्विग्भिश्च यथोदितैः ।
स्थापयेन् मन्दिरे विष्णुं यजमानः समाहितः ॥
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ।
अन्यथा चेद्धरिं धाम्नि स्थापयेन्मूढचेतनः ॥
नैवेष्टं फलमाप्नोति म्रियते वा चिरात् स्वयम् ।
न सन्निधत्ते भगवान् न च प्रीणाति चेज्यया ॥
महाभागवताश्चैव नियोज्या ऋत्विजस्तथा ।
तापादिपञ्चसंस्काराः महाभागवता स्मृताः ॥
मन्त्ररत्नार्थविदुषो ब्राह्मणान् वृणुयाच्छुभान् ।
शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नेन रहितैर्द्विजैः ॥
यद्यत् कर्मकृतं तत्तु महाहानिप्रदं भवेत् ।
अवैष्णवा स्थापितानां प्रतिमानाञ्च वन्दनम् ॥
यः करोति मूढात्मा रौरवं नरकं व्रजेत् ।
तस्मात्तु वैष्णवा एव नियोज्यास्तत्तत्कर्मसु ॥
शास्त्रयुक्तेन विधिना कुर्यात् संस्थापनं हरेः ॥

एवमुक्तप्रमाणवचनैः हरेः तत्पार्षदगणादीनाञ्च प्रतिष्ठापनविधिः । कर्मकाण्डविषये प्राधान्यतां नीयमानोऽन्येषामपि श्रौतस्मार्तकर्मणाञ्च वैष्णवपुराणेषु प्रोक्तानां प्रमुखतया बीजरूपतया च प्राशस्त्यं भजति-तराम् ।

इत्थमत्र जडचेतनात्मके जगति कर्मणः प्राधान्ये मूलरूपेणानादि-कालतो विष्णोरर्चाविधौ तदनु देवतान्तरार्चनाविधौ च कर्मकाण्ड-प्रवाहः प्रवहति । सुतरामद्यापि स प्रवाहोऽव्युच्छिन्नरूपेणाभि-नवोऽभिनवः कर्मकाण्डो हि चतुष्षष्टिकलात्मकप्रशस्तविद्यारत्नेषु मान्यतामुपेतो निखलमपि जगत् क्रमशः कर्मणैव सृष्टं रक्षितं प्रलयताञ्चाधिगम्यमैव ।

**ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे**
**विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।**
**रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः**
**सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥**

नीतिशतके श्लोकवचनं चरितार्थयन्ति मनीषिणः —

**यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो**
**बौद्धाः बुद्ध प्रमाणपटवः कर्तेति नैयायिकाः ।**
**अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः**
**सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥**

इति विशिष्टानि सूक्तिवचनानि प्रमाणभूतानि । कर्मस्वपि च सुकृद्दुष्कृद्रूपाणि विविधान्यामनन्ति शास्त्रकाराः । तदनुरोधेनैव विधिनिषेधात्मके वचनानि लोके कर्मसु प्रवर्तयन्ति निवर्तयन्ति च । तद् विना नैव कर्मफलक्षयः न हि क्षयमन्तरा निःश्रेयसाधिगमः कैश्चिदपि शास्त्रकारैः वर्णितः ।

तत्रापि गीतावचनानुसारमपि —

**"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः"** ।

इति वचनानि भूरिसः संरक्षणपरा महर्षयः । प्रतियुगमाधानपुंसवन-सीमन्ताद्यारभ्यान्तेष्टिकर्मपर्यन्तमखिलं जगत् कर्मभूरिति संसूचित-वन्त एव तत्रापि ब्रह्मचर्याश्रमे, गृहस्थाश्रमे, वानप्रस्थाश्रमे, संन्यासाश्रमे च सर्वा अपि श्रौतस्मार्तरूपा: यज्ञयागादिक्रियाः यथाशास्त्रमुप-

वर्णिता प्रवर्तिता यत्र गतैः पुरुषैः सर्वयुगेषु तस्मादेव क्रमशोऽधिकार-ग्रहणपूर्वकमेव क्रियाणां प्राशस्त्यञ्च विधाय धर्मशास्त्रप्रवर्तकै-राचार्यैः सात्त्विकराजसतामसभेदतः कर्माणि विभक्तानि प्राणिनां यथेष्टलाभाय लोके प्रवृत्तिकराणि वक्तुं शक्यन्त एव ।

एतद्विषये प्रबन्धेऽस्मिन्नयाध्याये यथाशास्त्रमेव सविस्तरं निरूपितं वर्तते ।

लोके जन्म गृह्णतां मानवानां वर्णाश्रमोचितानि कर्माणि यानि निर्दिष्टानि शास्त्रेषु तानि यथाविधि पालयन्त एव धार्मिकाः नैतिकाः सत्कर्मरक्षणपरा महान्तो जना आदर्शभूता मन्यन्ते ।

ये कर्मविरहिताः तेनोत्तमाः किन्त्वधमाः एव भाष्यन्ते । अत एव ब्रह्मचर्याश्रमेऽध्ययनं प्रथमं कर्म तदनु गुरोराराधनं जपयज्ञादि-सम्पादनं भिक्षाटनञ्चेत्यादयः महते पुरुषार्थाय कल्पते ।

अत्र विषये वरतन्त्वाश्रमे ब्रह्मचारिकौत्सोपाख्यानं रघुवंश-महाकाव्ये तदाधायके महाभारतादौ चानेकेषां महर्षिकल्पानां उद्दा-लकादिप्रभृतीनामितिवृत्तादिकं दृढं प्रमाणम् ।

गुरोराज्ञां शिरोधार्यैव ब्रह्मचारिव्रतान्निवृत्तो गृहस्थाश्रमं स्वीकृत्य यथाशक्यं शास्त्रोदितानि तदाश्रमे विहितानि कर्माणि सम्पादयन्नेव जीवनस्योद्देश्यं पवित्रमनुभवति गृही । तदानीं विष्णोः प्रीत्यर्थमुक्तानि विधानानि विष्णुसम्बन्धिन्येवाङ्गीकृत्यात्मनः पञ्चसंस्कारं विधाय तत्तत्कर्मसु लब्धाधिकारः चतुर्थाश्रमं यावदपि वैष्णवः कर्मकाण्ड-बद्धो भवति महाव्रती मन्यते । वैष्णवपुराणेषूक्ता विधयः यज्ञयागादि-प्रयोजका वैष्णवेभ्यो न बन्धनाय कल्पन्ते, परन्तु मोक्षाय गमनं प्रत्येव भगवद्दर्शनमेव भगवद्भागवतकैङ्कर्य्यविधिनाऽऽत्मनः स्वरूपसंरक्षणं मत्वा वैष्णवो न मोहमुपैति प्रत्युत प्रसीदत्येव सततम् । यतो वैष्णवाः लोकेऽपि मातृ-पितृ-कलत्रपुत्रप्रभृतीनखिलान्नपि प्राणिनो न लोकसम्बन्धतया मन्वते, किन्तु तान् भागवतबुद्ध्या भगवतः

सम्बन्धेनाजन्मतः शरीरं धारणमपि धन्यं मन्यन्ते भगवद्भागवत-सेवोपयिकम् ।

अतः शोधप्रबन्धेऽस्मिन् प्रारब्धसञ्चितक्रियमाणादिसमस्त-सुकृद्दुष्कृतापनोदनाय विविधोपायाः वैष्णवपुराणोक्ताः सङ्केतिताः । कथं तत्तत्कर्मणां सम्पादनं भवति ? कथञ्च तत्तत् कर्मभिः बद्धो भवति जीवः । कथञ्चोपदेशविधिरुपास्यन्ते तेषां कर्मणां क्षयाय चेति । सर्वं शोधप्रबन्धेऽन्याध्याये सविधि भाषिष्यत एव ।

वैष्णवपुराणमध्ये गरुडोपपुराणे सप्तमेऽध्याये श्रीसूर्यनारायणा-दीनां पूजनादिविषये रुद्रहरिसंवादात्मना कर्मकाण्डविधयः वर्णिताः सन्ति । तत्र वासुदेव-सङ्कर्षण-प्रद्युम्न-विष्णु-नरसिंह-वाराह-वैनतेय-सुदर्शन-पाञ्चजन्यश्रीवत्सकौस्तुभादीनाञ्च विशिष्टः पूजा-विधिः प्रोक्तः । तत्प्रसङ्गे समेषां ग्रहाणां चापि पूजा वर्णिता । तत्रै-वाष्टविंशतितमेऽध्याये भगवतः श्रीकृष्णस्य पूजनप्रकारः सविस्तरः वर्णितः ।

द्वात्रिंशदध्याये पञ्चतत्त्वानां त्रयस्त्रिंशदध्याये सुदर्शनस्य च पूजाविधिः समुद्धृतः सम्यक् । चतुश्चत्वारिंदध्याये भगवतो हय-ग्रीवस्य पूजाविधिः प्रोक्तः । एकचत्वारिंशदध्याये एव मरणकालीना पूजाप्रक्रिया प्रदर्शिता ।

अष्टचत्वारिंशदध्याये सर्वेषां देवानां प्रतिष्ठाविधानञ्च प्रतिपादितम् तत्र विशेषतो वेदिकानिर्माणप्रकारः समुट्टङ्कितः । पञ्चाशदध्याये नित्यक्रिया शौचादिव्यवस्था सम्यक् प्रोक्ता । एकपञ्चाशदध्याये दानं सुपात्रमभिलक्ष्य वर्णितम् । द्विपञ्चाशदध्याये नानाविधानि प्रायश्चित्तानि सुवर्णितानि षडशीतितमेऽध्याये गयायां स्नानं प्रेतशिलायां पिण्डदानं वर्णितम् । सर्वं तथ्यं शोधप्रबन्धे प्रकाश-यिष्यत एव । किमधिकं गरुडपुराणस्योत्तरार्धे प्रेतकल्पः सविधिः प्रतिपादितः । तत्र षडविंशेऽध्याये तीर्थमाहात्म्यं कर्मकाण्डान्तर्गतं सुप्रतिपादितम् । एवं पाद्मे पुराणे कपिलतीर्थे, सूर्यतीर्थे, गङ्गातीर्थे

मातृतीर्थे केदारतीर्थे वेदतीर्थेषु च श्राद्धकर्मणा पितृतर्पणेन देवहोम-कर्मणा स्नानादिकर्मणाऽश्वमेधयज्ञफलं वर्णितम् । तत्र बहुविधानि कर्माणि तद्जन्यफलानि च सुप्रतिपादितानि ।

पुष्कराख्ये तीर्थे स्नानादिकर्मणा महत्फलं विविधसिद्धीनां लाभो वर्णितः । चतुर्दशाध्याये नर्मदायां स्नानेन निवासेन च नरो मुक्तपापो भवतीत्यादिविशिष्टानि फलानि प्रोक्तानि । तत्र तत्र महतीनां नदीनां माहात्म्यं स्नानादिकर्मणाञ्च फलविशेषाधिक्यं प्रकाशितं वर्तते । यथा —

**गायन्ति देवा सततं निविष्टा रेवा कदा मज्जनदा नो भवेत् ।**
**स्नाता नरा यत्र न गर्भवेदना पश्यन्ति तिष्ठन्ति च विष्णुसन्निधौ ॥**

अनेकविधा क्रिया पाद्मे प्रकाशिता मानवानामभ्युदयाय । एकोन-त्रिंशेऽध्याये कालिन्दीमाहात्म्यं वर्णितम् । तत्तीर्थञ्च सर्वतीर्थेभ्य श्रेष्ठमुक्तम् । यत्र स्नानेनापि मुक्तिलाभः । एवं यमुनामाहात्म्यमपि सम्यगभिहितम् ।

व्रतराज एकादश्यपि महान् धर्मसेतुः वर्णितः एकादशीमुपोष्य सर्वविधं फलं लभते । पाद्मस्योत्तरखण्डे विशिष्टः कर्मकाण्डः प्रकाशितः । तत्र तुलसीपूजनं रोपणं माघे वैशाखे तेन कर्मणा मोक्षाधिगमो भवतीति सुचारुरूपेण सुवर्णितम् ।

भगवतश्शालग्रामस्य पूजाविधिः सर्वयज्ञेषु प्रशस्ततया वर्णितः । द्वाविंशोऽध्याये जन्माष्टमीव्रतविधानं भगवतश्श्रीकृष्णचन्द्रस्योद्यापन-विधिश्च तद्द्वारा श्रीकृष्णार्चनविधिश्च सम्यगभिहितः । तत्रापि तदङ्गतया गणेशादिपूजाविधिश्चोपवर्णितः । रात्रौ जागरणादिरूपं व्रतमभिहितं महते फलाय ।

तत्रैकादश्या उपवासमाहात्म्यं भगवान् महेश्वरः एव सुप्रकाशितवान् । पाद्मे वैष्णवपुराणे तु श्रीवैष्णवानां सर्वे धर्मा प्रायो निरूपिताः । सर्वासामेकादशीतिथीनां व्रतनियमा बोधिताः ।

देवशयनदेवोत्थानैकादश्योः महान् विधिः प्रकाशितः षट्-

षष्टितमेऽध्याये चातुर्मास्यव्रतविधयः प्रोक्ताः । तत्र यमयातनतो निवृत्यै यमानुजाया यमुनायाः यमस्य च पूजाविधिरपि सुवर्णितः ।

कार्तिकमाहात्म्यं तस्मिन् स्नानयज्ञादीनाञ्च विधानमपि विस्तृतं वर्णितम् ।

माघस्नानविधिस्तथा यज्ञयागादिविधिश्चेति वर्णितः । विष्णु-पुराणे तृतीयांशान्तर्गते दशमेऽध्याये जातकर्मणो नामकरणविवाह-कर्मणाञ्च स्वरूपं विधिश्चोपवर्णितो विधिवत् सदाचाररूपस्वरूपं नित्योपयोगिन्यः क्रियाः प्रोक्ताः सन्ति । आभ्युदयिकश्राद्धं सकलेषु कर्तव्यसंस्कारेषु माङ्गलिकेषु सूपपादितवान् पुराणकारः । नित्य-कर्मसम्पादनाय नदीनदतडागादिषु स्नानकर्मप्रक्रियाऽपि वर्णिता ।

तत्र काम्यश्राद्धवर्णनमपि कृतं शोधप्रबन्धे दर्शयिष्यते । तत्रैव तृतीयांशे पञ्चदशाध्यायतः आरभ्य श्राद्धविषयकाः बहुविधयः बहुविधाः वर्णिताः माहात्म्यञ्चोपपादितम् ।

एवं नारदीयपुराणेऽपि च सप्तमेऽध्याये गङ्गास्नानादिकर्मणां माहात्म्यं समुट्टङ्कितम् । सप्तदशेऽध्याये द्वादशीव्रतविधिश्चोक्तः ।

चतुर्विंशतिरध्याये सदाचारस्य वर्णाश्रमधर्माणां विष्णोः पूजा च सुवर्णिता । पञ्चविंशतितमेऽध्याये यज्ञोपवीतधारणं गायत्र्याध्ययनं यज्ञविधयश्च सुप्रतिपादिताः । षड्विंशतितमेऽध्याये सकलस्मार्त-धर्मस्य निरूपणं विहितम् । अष्टाविंशेऽध्याये श्राद्धकालः तत्र भोजनार्हद्विजानां परिज्ञानं कारितम् ।

एवं नानाविधानां कर्मणामत्र विधिवत्प्रतिपादनं कृतम् । बहूनां देवानां देवीनाञ्चोत्तराध्याये पूजाविधिरपि प्रदर्शित एव ।

उपनिषदादिमतानुसारमत्र किमप्यनुसन्धेयमुच्यते, यथा —

**दृष्ट्वा च नारायणादिदेवं मुमुक्षुभिर्मृग्यपदाब्जपांसुम् ।**
**दूरान्नमस्कृत्य पदारविन्दयोर्नमो नमो भूय उदाहरन् मुदा ॥**

एवं रीत्या मुमुक्षुरनुदिनं भगवन्तं प्राप्तुं दण्डवत्प्रणामादिना प्रसादयेत् ।

एवंविधं जनं शरीरयात्रासमाप्तिबेलायां पुत्रपौत्रादयः दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनम् ।

"भूमिष्ठं पितरं पुत्रो यदि दानं प्रदापयेत् ।
तद्विशिष्टं गयाश्राद्धं दशाश्वमेधशतादपि ॥"

अत्र मोक्षधेनुदानं देयम् । तद्विषये वचनं यथा —

**मोक्षं देहि हृषीकेश ! मोक्षं देहि जनार्दन ! ।
मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥**

अन्यच्चापि —

**तुलसीसन्निधौ कृत्वा शालग्रामशिलां तथा ।
म्रियमाणस्य कर्णे तु पुण्यमन्त्राञ्जपेत्ततः ॥
श्रावयेच्च तदा विद्वान् विष्णोर्नाम सहस्त्रकम् ।**

तत्र दश दानानि प्रकीर्तितानि । तथा —

**गोभूतिलहिरण्याज्यं वासो धान्यं गुडानि च ।
रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् ॥**

पञ्चकमरणशान्तिविधिरपि वर्णितोऽत्र विस्तारशः । तत्र कुश-गर्भयवपिष्टेन पञ्च पुत्तलान् निर्माय ताँश्धोर्णसूत्रेण वेष्टयित्वा प्रेतवाह-प्रेतसख-प्रेतप-प्रेतभूमिप-प्रेतहर्ता — इति नामभिर्गन्ध-पुष्पादिभिः पूजयित्वा चितास्थशवशरीरे न्यसेत् ।

तत्र च —

**त्रायन्तामिह देवाः त्रायन्तां मरुतां गणाः ।
त्रायन्तां विश्वभूतानि यथा मरणा असत् ॥**

इत्यादयो विविधा वेदमन्त्रा अपि पठनार्हा वर्णिताः । वैष्णव-पुराणोक्तवैष्णवानामन्त्येष्टिसंस्कारविशेषः सुतरां महत्त्वपूर्णो वर्तते ।

तत्र ब्रह्ममेधविधिर्यथा— एतद्विषये वैष्णवपुराणोक्तवैष्णवधर्मानुसार-मेव ।

> विपन्नं दीक्षितं ज्ञात्वा प्रार्थनीयो महागुरुः ।
> स्नेहेन कृपया वाथ सह शिष्यैः कृतात्मभिः ॥
> पापात्कृताह्निकः शश्वद् भुक्तान्नो विशेषतः ।
> पिता वा यदि वा माता भ्राता वान्यसुहृज्जनः ॥
> यदि पञ्चत्वमापन्नः कथं कुर्यात् द्विजोत्तमः ।
> कनिष्ठं वर्जमेवात्र वयनं मुनिभिः स्मृतम् ।
> स्नात्वाऽऽचम्य विधानेन कारयेत् पूजनं हरेः ॥
> गङ्गायां भास्करे क्षेत्रे मातापित्रोर्गुरो मृतौ ॥
>
> — याज्ञवल्क्य

> आधाने सोमपाने च वपनं सप्तसु स्मृतम् ।
> प्रथमेऽह्नि कर्त्तव्यं वपनं चानुभाविकम् ॥

इत्थं कृतक्षौरः धृतशुद्धपटो हि कर्ता कुशजलाक्षतदक्षिणाञ्चादाय सङ्कल्पं कुर्यात् ।

"ओं तत् सदित्यादि अमुकसम्बधिनः सर्वविधभगवदपचारभाग-वतापचारनिवृत्तिपूर्वकं लक्ष्मीनारायणसायुज्यमुक्तिप्राप्तये ब्रह्ममेध-(पितृ)संस्कारकर्मणि त्वामाचार्यत्वेन वृणे - इत्यादिवचनम् ।"

तत्र सुत्रवतीसहितगजाननजपतसेनकालप्रकृतिहरिमुखादि-प्रभृतीन् संस्थाप्य स्मार्तविविधप्रक्रियाभिः पूजनम् । तत्र षोडश-घटस्थापनविधिः । पञ्चगव्यस्थापनविधिः । कुष्माण्डसूक्तपाठः । तदनन्तरं विधिवद् यज्ञं सम्पाद्यैव ततः शवसंस्कारः प्रवर्तते । तत्र यज्ञीयवृक्षविशेषाः, तत्र लयहोमप्रक्रियाश्च । बलिदानविधिः प्रतीक-भूतः सर्वेभ्यः श्मशानवासिभूतेभ्यो बलिदानं विधाय फललाज-दधि-

सक्तूनां चतुरः पिण्डान् कृत्वा प्रत्यवनेजनमोचनम् । सर्वदिग्वासिभ्यो भूतेभ्यो बलिदानं सम्मतम् ।

श्रीवैष्णवसंन्यासिनां विशेषरूपेण गर्तस्थापनविधिः प्रक्रियाऽपि वर्णिता । ततः परं यथाकालमेव दशपिण्डदानविधिरपि सपिण्डन-विधिश्च विशेषतो भवति । स्मार्तापेक्षयाऽत्र तदङ्गतयाऽन्ते च - वासुदेव - सङ्कर्षणप्रद्युम्नाद्यनिरुद्धसर्वेषां माहतं पूजनादिकं च विधानतः ।

तत्र बृ. हा. वचनानुसारं विशेषः मृतव्यक्तिः स्त्री चेत्तत्रायं विवेको विशेषो यत् -

**उक्तानां वासुदेवादीनां पत्नीस्वरूपेण तस्यालयं भावयेत् ।**

तथा हि -

अनिरुद्धपत्नी नित्यानन्दा, प्रद्युम्नपत्नी सत्या, सङ्कर्षणपत्नी हिरण्या, वासुदेवपत्नी हरिणी, ततश्च मृतस्त्रियं नित्यानन्दारूपां भाव-यित्वा तत्पिण्डभागत्रयञ्च क्रमेण - सत्याहिरण्याहरिणीपिण्डेषु श्वश्रु-प्रश्वश्रुवृद्धप्रश्वश्रुरूपेषु संयोज्य तत्र लयं भावयेत् । ततः प्रार्थना पौष्करे, यथा—

**नमो विष्णुपदस्थेभ्यः स्वधाः वः पितरो नमः ।**
**हरये पितृनाथ अग्निसोमात्मने नमः ॥**
**सत् सोमपात्मने तुभ्यं नमो वर्षिदात्मने ।**
**आ संसाराभिर्जनका अग्निष्वाता तथाच्युत ॥**
**पितामहा सोमपास्त्वं त्वमन्ये प्रपितामहाः ।**
**तुभ्यं नमो भगवते पितृमूर्तेऽच्युताय च ॥**
**नारायणाय हंसाय विष्णो त्रिपुरुषात्मने ।**
**मुक्त्वा त्वमेव भगवन्नमो त्वामर्चयामि च ॥**
**न तर्पयामि विश्वेशः नान्यमावाहयाम्यहम् ॥**

तदनन्तरं शुभारम्भं सम्पाद्य वैकुण्ठोत्सवविधौ कार्यारम्भः । पुनः तीर्थस्नानविधिः, तत्रापि सत्कर्मानुष्ठानम्, तीर्थप्रार्थनापञ्चगव्य-प्राशनम्, पञ्चगव्यस्नानम् । तत्र मृत्तिकास्नानम् । प्रायचित्तस्नानम् ।

तत्र हि - वरुणसमुज्येष्ठशुद्धिसूक्तपवमानादिसूक्तानां पाठः । तिलकधारणविधिश्च। पुनः कुम्भार्चनविधिः, कलशप्रतिष्ठापूजना-दिकम् । विष्वक्सेनादिपूजनविधिः, वरुणपूजा सम्यक्पुष्याहवाचनम् । पञ्चरात्रोक्तपुण्याहवाचनम् । वास्तुसूक्तम् । वैदिकानां पुराणज्ञानां विदुषां वैष्णवानां वरणमाचार्यादिरूपेषु । भगवत्प्रतिमाचर्नविधिः । षोडशोपचारविधिना पूजनम् । पञ्चामृतस्नानादिक्रिया । विष्णोः लक्ष्म्याश्चाष्टोत्तरशतसहस्रसंख्याकः नाम्ना विधिवत्पूजनम् । होमश्च विधानतः । तत्र केशवादिचतुर्व्यूहादिचतुर्विंशतिव्यूहहोमविधिः । श्रीवैकुण्ठपार्षदहोमविधिः । प्रायश्चित्तहोमश्च, शान्तिहोमः । स्वीष्टकृद्धोमविधिः । तत्र च नारायणबलिविधिः, इत्थमत्र वेद-पुराणादिमहाभारतरामायणादिवेदान्तपाठश्चेति सम्पादनपुरस्सरमेव सो विधिः । एतावता प्रबन्धेनात्र याः क्रियाः वैष्णवपुराणोक्ताः सङ्केतितास्ताः सर्वाःअपि भगवत्प्रीत्यर्थं विधीयते । शेषमत्रानुक्तं शोध प्रबन्धे एव सुस्पष्टं भविष्यति ।

वैष्णवानां प्राधन्येनोपास्यमानानि व्रतानि श्रीरामनवमी-श्रीकृष्णाष्टमी-श्रीवामनद्वादशी-श्रीनृसिंहचतुर्दशी-एकादशीप्रभृतीनि सन्ति । येषां विधानं शास्त्रदृष्ट्या व्रतनिर्णयानन्तरमेव प्रतिपाद्यते । अतः वैष्णवास्तानि व्रतानि श्रद्धया समुपासन्ते सततम् । तस्मादत्र शोधप्रबन्धे प्रोक्तव्रतानां निर्णयः उपासनाविधिश्च विशेषकर्मरूपतया कर्मकाण्डविषयाङ्गतत्त्वात्तेषां प्रवचनमिहानिवार्यं भाति ।

अतोऽत्र कर्मकाण्डविषयतया श्रीरामनवमीव्रतस्य, श्रीकृष्ण-जन्माष्टमीव्रतस्य, श्रीवामनद्वादशीव्रतस्य श्रीनृसिंहचतुर्दशीव्रतस्यै-कादशीव्रतस्य च सुनिर्णयः विशेषनियमः धर्मशास्त्रसंहितापुराणादि-वचनानुरोधेन व्रतसम्पादनं पूजाविधिश्चोपवर्णितः ।

वस्तुतः कस्याश्चिदपि क्रियायाः कस्यचिदपि देवस्योपासना कर्मकाण्डमूलभूता एव विद्यते । श्रद्धावतां भक्तानां या प्रवृति-र्जायतेऽनुष्ठानादिषु सा न निरुद्देश्या वक्तुं शक्या । कोऽपि यागः किमपि तपः, क्वचित्तीर्थाटनं दानं प्रतिग्रहः आजन्मतः संस्काराश्च सर्वेऽपि सोद्देश्या एव परिलक्ष्यन्ते शास्त्रेषु । एतत्सर्वमनुरुद्ध्यैवात्र श्रीविष्णुपुराणविषयाधिगतकर्मकाण्डस्यापि केनचिदुद्देश्येन भाव्यमेव । यथा प्रश्नसंहितायां प्रथमेऽध्याये —

महर्षयः पुरा केचिद् ब्रह्मजिज्ञासवो महीम् ।
पर्यटन्तो महर्षिणामग्निहोत्राणि जुह्वताम् ॥
पप्रच्छुः केन शास्त्रेण ब्रह्मज्ञानं भविष्यति ।
आराधनं भगवतः कर्तुं शास्त्रेण केन वा ॥
तत्कर्म केन शास्त्रेण कर्तव्यं भगवत्प्रियम् ।
तत्सर्वं ब्रूत मुनयः संसारार्णवमज्जताम् ॥
इति पृष्टे तेष्वेकः कोहलो नाम वै मुनिः ।
वयं तु कर्मकाण्डोक्तं कर्म ब्रह्मैव वेदिनः ॥
उपास्महे विष्णुमेव ह्यग्निहोत्रादिरूपिणम् ।
को वा जानाति तद्विद्यां क्वास्ते स च महामुनिः[1] ॥
ब्रह्मविद्याप्राप्त्युपायं शृणुध्वं मुनिपुङ्गवाः ।
मेरोत्तरतः पार्श्वे सिद्धगन्धर्वसेविते ॥
सिद्धाश्रमे ब्रह्मसुतः एकतो नाम वै मुनिः ।
स तु श्रीशादवाप्तं तच्छास्त्रमित्यनुशुश्रुमः ॥

1. प्रश्नसंहितायां 1/2, 4, 5, 6, 7, ।

इत्थमेतेन वचनेन श्रीवैष्णवसम्प्रदाये प्रथमाचार्या श्रीलक्ष्मीः एव मन्यते । तस्मादेव श्रीसम्प्रदायाभिधानं सङ्गच्छते । श्रीरामानुजादयस्तु प्रवर्तकास्तत सम्प्रदायस्य तेन तेषामपि नाम क्वचिद् योजितं दृश्यते । यथा रामानुजसम्प्रदाय इति ।

एवं रीत्या श्रीवैष्णवसम्प्रदायस्य कर्मकाण्डमूलतया प्रसरः प्रशस्तों मन्यत एव ।

इत्थं कहोलमुनिवचनानुसारं मुनयः यथानिर्दिष्टदेशं प्राप्ता । तदा एकतो नाम मुनिः सर्वान् मुनीन् प्रीणयन् प्रोवाच —

**यथा श्रीनिकेतपदं लप्से भक्तसूरिनिषेवितम् ।**
**आदौ युगे यथा श्रीशाद् ब्रह्मज्ञानमवाप्तवान् ॥**[1]

ततः क्रमेणैव वक्ष्यामि शृणुध्वं मुनिपुङ्गवाइति वचनेन सर्वानुपदिदेश । तत्र च श्रीनारायणमुखादेव—

**इयं श्रीमन् मुखादेकं लोकस्य हितकाम्यया ।**
**अधीतिनो शास्त्रमेकमुपदेष्टुं तवेच्छति ॥**[2]

**वशिष्ठादिषु गोत्रेषु ह्युत्पन्ना दीक्षिता मया ।**
**एवं नारायणवचनप्रसङ्गे ॥**

नारायणमुखोद्गीतं श्रुत्वा मुनिपुङ्गवाः —

**उपादिशत् पाञ्चरात्रं श्रीप्रश्नमिति संज्ञितम् ॥**
**तयोः पूजामकरवं यथावन्मुनिपुङ्गवाः ।**
**ततस्तु भगवानाह बध्वाञ्जलिपुटस्थितम् ॥**

तत्र वेदशिरा पञ्चरात्रविद्योपासकाः के ? कुत्र जाताः ? इति उत्तरयति ।

**भारद्वाजो वशिष्ठश्च विश्वामित्रस्तथापरः ।**
**कौडिन्यश्चापि मुनयो ह्यस्मद्गोत्रप्रवर्तकाः ॥**

---

1-2 = प्रश्नसंहिता, 1/23, 24, 40.

श्रीप्रश्नं पञ्चरात्रागममूलकं श्रियो वक्त्राच्छ्रुतम् ।
एतद्धि मोक्षदं सर्वशास्त्रार्थसारमाराधनादिकम् ॥
श्रियो मुखात् त्वया प्राप्तं ब्रूहि ब्रह्मन् हिताय नः ॥

श्रीरुवाच – मायां प्राप्येति ५ श्लोकतः १२ श्लोकं यावत् —

सर्वलोकहितार्थाय दयासिन्धो जगत्पते ।
उपादिशज्जगत् स्वामिन् अमी मुक्तिमवाप्नुयुः ॥

इत्यन्तं जीवानां कल्याणाय श्रीसम्प्रदायविषयकं गोप्यं रहस्यं प्रापच्छत् । भगवानपि —

वेदमेकायनं नाम वेदानां शिरसि स्थितम् ।
तदर्थकं पञ्चरात्रं मोक्षदं तत् क्रियावताम् ॥
यस्मिन्ननेको मोक्षमार्गः वेदप्रोक्तः सनातनः ।
मदाराधनरूपेण तस्मादेकायनं भवेत् ॥

द्वितीयेऽध्याये —

एवम्भूतस्य शास्त्रस्य मोक्षप्रदस्य कथम् ।

पञ्चरात्रनामेति विषयेऽपि—

रात्रिरज्ञानमित्युक्तं पञ्चेत्यज्ञाननाशकम् ।
तच्छास्त्रं पञ्चरात्रं स्यादन्वार्थस्यानुरोधतः ॥
सार्धकोटिप्रमाणेनानुष्टुभाच्छन्दसा रमे ।
वेदवन्नित्यमेतच्च मल्लोके नित्यसूरयः ॥
आमनन्ति सदा भक्त्या मनसा पूजयन्ति च ।
अन्तरैत्तद् वेद शास्त्रज्ञानं मोक्षप्रदं न हि ॥
यस्मिन् ज्ञानेन सहितं योगश्चापि विशेषतः ।
आलपानाञ्च निर्माणं बिम्बनिर्माणमेव च ॥

एतेषां लक्षणञ्चापि सविशेषमुदाहृतम् —

प्रतिष्ठा चाग्निकार्यञ्च प्रायश्चित्तमशेषतः ।
पूजकानां दीक्षा च सिद्धान्ताः समुदीरिताः ।।
मद्यागा विविधा प्रोक्ताः उत्सवः बहुभेदवत् ।।
मन्त्रोधारापि कार्याणि बहून्यस्मिन् स्थितानि हि ।
श्रियो बहुविधप्रश्नानामुत्तरं ददता भगवता ।।

इति वचनैन सात्त्विकानि पुराणानि स्मृतयश्च सात्त्विक्यः समुपासितव्या इति वैष्णवसमाजे सुप्रथितम् । सात्त्विकपुराणानि —

1- विष्णुपुराणम्
2- नारदपुराणम्
3- भागवतपुराणम्
4- गरुडपुराणम्
5- पद्मपुराणम्
6- वराहपुराणम्

यथा पाद्मे भगवतश्शिवस्य वचनं पार्वतीं प्रति —

वैष्णवं नारदीयं च तथा भागवतं शुभम् ।
गारुडं च तथा पद्मं वाराहं शुभदर्शने ।।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ।।

(18-19 श्लो.)

उत्तरखण्डे 236 अध्याये ।

फलमपि प्रोक्तं तदुपासनया, यथा—

सात्त्विकाः मोक्षदाः प्रोक्ताः राजसा स्वर्गदाः शुभाः ।
तथैव तामसा देवि ! निरयप्राप्तिहेतवः ।।

स्मृतयः सात्त्विकाः —

**वाशिष्ठञ्चैव हारीतं व्यासं पाराशरस्तथा ।**
**भारद्वाजं काश्यपं च सात्त्विकाः मुक्तिदाः स्मृताः ॥**

इत्थं श्रीवैष्णवपुराणेषु संहितादिषु च विशिष्टो विधिः प्रोक्तः ।

**आस्तिकः कर्मकाण्डोक्तकर्मानुष्ठानतत्परः ।**
**सर्वविद्यासु कुशलः शान्तो ब्राह्मणपुङ्गवः ॥**
**वैष्णवं नारदीयं च तथा भागवतं शुभम् ।**
**पञ्चरात्रोक्तविधिना दीक्षितो दीक्षितोत्तमैः ॥**
**पञ्चरात्रार्थतत्त्वज्ञो मदंशो गुरुरीदृशः ।**
**एवंविधं गुरुं ज्ञात्वा गृहे तस्य व्रजेत् सुधीः ॥**

एतैर्वचनैर्वैष्णवानां कृते विशेषरूपेण भगवन्मन्दिरादिनिर्माणादौ यज्ञयागादौ च दीक्षां गृहीत्वैव पूर्णता फलप्रदा च वर्णिता । प्रोक्तम् —

**त्वयाऽहं प्रार्थितो देवि पीयूषमुर्द्धर्यथा ।**
**सात्त्विकभागमृद्धृत्य लोकस्य हितकाम्यया ॥**

मन्दिरादिलक्षणं देवमूर्तीनां निर्माणव्यवस्था स्थापनविधिश्च विमाननिर्माणञ्चापि वर्णितम् । सम्पूर्णा प्रश्नसंहिता कर्मकाण्ड-विषयैर्व्याप्ता वैशिष्ट्यमावहति सर्वशास्त्रापेक्षया ।

शोधप्रबन्धे वैष्णवलक्षणं पुराणानुसारम् - वैष्णवानां पञ्च-संस्कारविधिः स्वरूपम्, श्रीवैष्णवत्वप्राप्तौ तन्माहात्म्यञ्चेति सात्त्विकानि पुराणानि वैष्णवपुराणत्वेनाभिहितानि नान्यानि तदुपासनया फलानि चोक्तानि ।

कर्मकाण्डोऽपि प्रमाणलक्षणे सम्भवद् वेदविरोधानां व्यासाद्य-परिगृहीतानामेव स्मृतीनां प्रामाण्यमसूच्यते । शोधप्रबन्धे कर्म-काण्डविषयकानि श्रीवैष्णवपुराणानि प्रोक्तानि सन्ति । तद्विषये रहस्यमेतदवश्यं प्रकाशनीयं विद्यते एव, यत्प्रोक्तपुराणेषु यानि

विधिनिषेधात्मकानि वचनानि तानि हि वेदोक्तमार्गपुराणवेद-तुल्यानामागमोत्तमानां पाञ्चरात्रादीनां तदनुगामिनीनां वृद्धहारीत-बौद्धायनभरद्वाजशाण्डिल्यस्मृतीनाञ्चान्तस्तलमवगाह्य तत्रत्य-प्रक्रियाः विविधोपासनरूपाः नानाविधयज्ञानुष्ठानरूपाः विविध-संस्कारसम्पादनपरा श्रीविष्णुरामकृष्णनृसिंहवामनादिविभिन्न-पार्षदप्रवराणां प्रतिष्ठापनप्रक्रियाश्चेत्येत्सर्वं प्राधान्येन श्री-वैष्णवपुराणानि प्रतिपादयन्ति । तस्मादिह यथास्थलं कर्मकाण्ड-विषयकतत्त्वानां वर्णनप्रसङ्गे तत्तत्पुराणाभिसम्मताः विधयः पाञ्चरात्रागमादिभिः प्रमाणिताः दृश्यते ।

तथाविधप्रामाण्यधिगतस्य पाञ्चरात्रागमस्य दिव्यत्वमुत्कृष्ट-फलदातृत्वञ्चात्र प्रोच्यते ।

कालोत्तरे तस्य विशिष्टभेदोऽपि यथा अनेकभेदभिन्नं च पञ्च-रात्राख्यमागमम्—

> पूर्वमागमसिद्धान्तं मन्त्राख्यं तदनन्तरम् ।
> तन्त्रतन्त्रान्तरञ्चेति चतुर्धा परिकल्पितम् ॥

एवं चतुर्धा विभागसामान्येन प्रतिपाद्यनारायणीय मौद्गला-व्यमग्निकाश्यपसंज्ञितमित्यादिना शास्त्राण्येति सुव्रत, इत्यन्तेनागमा-दिसिद्धान्तेषु चतुर्षु कतिपयसंहितानां निवेशनमनुक्तानामपि संहिता-नामुपलक्षणतयोदाहृत्यैवोक्तम् । एतद् वै ।

पञ्चरात्राख्यं शास्त्रं सर्वोत्तमोत्तमत्वेन निर्धाय चतुर्धा भेदभिन्नं च स्वयं व्यक्त्यादिभेदतः, स्वयं व्यक्तं हि सिद्धान्तमागमाख्यं पुरो-दितम् । मन्त्रसिद्धान्तसंज्ञं यदिव्यं परिकीर्तितम् ।

> तन्त्रसंज्ञं हि तच्छास्त्रंत त्सिद्ध्यं समुदाहृतम् ।
> तन्त्रान्तरन्तु यत् प्रोक्तमार्षं तु तदुदाहृतम् ॥

अत्र समासतः- एतद् वक्तुं शक्यते, यत् —

> न वैष्णवाराधनात् पुण्यं विद्यते कर्म वैदिकम् ।
> सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः ॥

नित्यं विष्ण्वर्चनं परम् । इत्यादिभिः सर्वोत्तमत्वेन नित्यत्वेन च श्रुतेऽस्मिन् धर्मे कस्य प्रवृत्तिः साधीयसी न स्यात् ?

**पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु ।**
**भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः ॥**

इत्यादिसच्छास्त्रप्रमाणैर्विष्णुपुराणान्तर्गतकर्मकाण्डविषयको विमर्शोऽधिकं मूल्यमर्हत्वेवेति धिया तत्र प्रवृत्तिर्जाता तद्विषये शोधप्रबन्धे विशेषतो वक्ष्यत एव ।

शोधप्रबन्धेऽस्मिन् - अनुबन्धचतुष्टयात्मना विवेच्यविषयाः प्रतिपाद्यन्ते । श्रीवैष्णवत्वं तदीयपुराणानि तदनुमोदितकर्मकाण्ड एव विषयः प्रयोजनञ्चात्र विशिष्टम् — लोके वेदमूला एव सर्वाः क्रियाः प्रशस्ताः मन्यन्ते ।

वेदश्च — कर्मकाण्ड-ज्ञानकाण्डोपासनाकाण्डत्रयात्मकः प्रथितः । लोकव्यवहारे शास्त्रमूलाः सम्प्रदायाः - विभिन्नाः सन्ति । यथा - शैवसम्प्रदायः शाक्तसम्प्रदायः गाणपत्यसम्प्रदायः वैष्णवसम्प्रदायप्रभृतयः । तेषु सम्प्रदायेषु सिद्धान्तभेदाः, कर्मभेदाः, उपासनाभेदाः स्वभावतः वैष्णवेष्वपि निम्बार्क-माध्व-वल्लभ-गौड-रामानन्द-श्रीवैष्णवसम्प्रदायादयः प्रभूताः भेदाः ।

सर्वस्मिन् वैष्णवसम्प्रदाये सत्यपि विभिन्नक्रियाकलापादिभेदे, उपास्यदेवे न भेद इत्यपि सत्यम् । अतोऽत्र प्रयोजनं शोधप्रबन्धस्य प्रमुखमिदं वक्तुं शक्यते यत् प्रायः स्मार्तसम्प्रदायस्य कर्मकाण्डविषयः वैष्णवकर्मकाण्डे सामञ्जस्यमावहति, परन्तु बहुत्र प्रक्रियाभेदः लोकाचारः शास्त्राचारश्च कर्मकाण्डविषयकभेदोऽपि नापलपितुं शक्यः ।

अतोऽत्र स्मार्त-शैव-शाक्त-गाणपत्यादि सम्प्रदायापेक्षया वैशिष्ट्यं वैष्णवकर्मकाण्डे प्रदर्शनमेव महत्त्वं बिभर्ति ।

# अथ द्वितीयोऽध्यायः

## कर्मकाण्डशब्दार्थः

कर्मकाण्डं कर्मणां कर्तव्यताप्रतिपादकं काण्डम् । कर्मणा कर्तव्यताप्रतिपादके वेदभागकर्मकाण्डस्यारम्भप्रयोजनं च (बृह. उ.) भाष्ये दर्शितम् यथा । तत्रास्य कर्मकाण्डेन सम्बन्धोऽभिधीयते । सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपाय-प्रकाशनपरः । सर्व्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयेऽरिष्ट-त्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमाना-भ्यामेव सिद्धत्वान्नागमान्वेषा, न चासति जन्मान्तरसम्बन्धात्मा-स्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् ।

स्वभावादिदर्शनात्तस्याज्जन्मजन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मा-न्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते । "येयं प्रेते विचिकित्सामनुष्येऽस्तीत्येके नायमस्तीति चैके", इत्युपक्रम्य "अस्तीत्येवोपलब्धव्यः" इत्येवमादिनिर्णयदर्शनात् । यथा च मरणं प्राप्य "इत्युपक्रम्य योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः स्थानुमन्येऽनु स यन्ति यथा कर्म्म यथा श्रुतम्" इति च स्वयं ज्योतिरित्युपक्रम्य "तं विद्याकर्मणः समान्वारभेते पुण्यो वै पुण्येन कर्म्मणा भवति" ज्ञापयिष्यामित्युपक्रम्य "विज्ञानमयः" इति च व्यक्तिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेवेति चेन्न वादिविप्रतिपत्तिदर्शनात् । नहि देहान्तर सम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः । नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत् - न निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकस्त्वहमिति प्रत्यये जायमानेऽपि

देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात् प्रत्यक्षविषय-वैलक्षण्यात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः । तथानुमानादपि, **ध्रुवात्मा**-स्तित्वे लिङ्गस्यादर्शितत्वाल्लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत्, न जन्मान्तरसम्बन्धस्याग्रहणाद् - आगमेन त्वात्मास्तित्वेऽवगते वेद-प्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किका-श्चाहमत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभानीति कल्पान्तो वदन्ति अप्रत्यक्षाश्चानुमेयश्चात्मेति । सर्वथाप्यस्त्यात्मा देहान्तर-सम्बन्धीत्येवम्प्रतिपत्तुर्देहान्तगतेष्वनिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्त-द्विशेषज्ञापनाय कर्मकाण्डसमारब्धम् । अधिकारिभेदेनैव कर्म-काण्डे प्रवृत्तिः

**"लोकेऽस्मिन् द्विविधा निष्ठ पुरा प्रोक्ता मायानघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्"** ॥

इति गीतायां द्वैविध्योक्ते अत एव "तमेतं ब्राह्मणा विविदिष्यन्ति वेदानुवचनेन यज्ञेन तपसा नाशकेन" इति श्रुत्येव कर्मणा विविदिषा हेतुनोक्तेः विविदिष्यामैव कर्मकाण्डप्रतिपाद्यकर्मणामुपयोगः इत्याकरे स्थितम् ।

"काण्डशब्दः"— पुं. नं. अर्थात् पुलिङ्गं नपुंसकलिङ्गं च भजते । कनी - दीप्तौ ड तस्य नेत्वं किञ्चदीर्घः । काण्डशब्दस्य बहवोऽर्था दृश्यन्ते - यथा - 1. दण्डे, 2. बाणे, 3. पर्वणि 4. कुत्सिते, 5. वर्गे 6. अवसरे 7. जले च अभः ।8. नाले (डाटा) 9. वृक्षस्कन्धे 10. स्तम्बे (गुल्मभेदे), 11. निर्जने, धरणिः 12. नाडीवृन्दे, 13. वृक्षभेदे (शरवृक्षे), 14. श्लाघायां हेमचन्द्र दण्डः चात्र षोडशहस्तमितः वंशः वंशटिण्डश्च[1] । "काण्डान्तात् क्षेत्रे" पा क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीपतद्धितलुकि सति द्वे काण्डे प्रमाणं यस्याः सा द्विकाण्डा क्षेत्रभक्तिः बाणे "सविषकाण्डमादाय

---


1. वेदभागे च - 1.

मृगयामास वै मृगम् - भा. अनु. श्लो. = 265 ।

वर्गे "क्षपातमस्काण्डमलीमसं नभः माघः" वृक्षकाण्डमितो भाति रामा । दूर्ध्वा काण्डमिव श्यामा भट्टिः ।" वर्गञ्च एकजातीय-समुदायः "क्रियाकाण्डेषु निष्णातो योगेषु कुरुद्वह ।" भाग 4, 2, 4, 9 "अग्निमुखं यस्य तु जातवेदा जातः क्रियाकाण्डं निमित्तजन्मा" भाग 8 , 4, 2, 4, उपचारात्तत्प्रतिपादकग्रन्थे च ब्रह्मकाण्डं कर्मकाण्डं अवसरश्चात्र योग्यकालः प्रस्तावश्च तत्र योग्यकाल अकाण्डशब्दे 539 उदा० । प्रस्तावे अयोध्याकाण्डं लङ्काकाण्ड-मित्यादि ।

नालमत्र लतादीनां पत्रधारणदण्डः (डाण्टा) नालारूपञ्च । तत्र नाले "काण्डमूलपत्रपुष्पफलप्ररोहरसगन्धानां सादृश्येन प्रतिनिधिं कुर्यात् । सर्वाभावे यवः प्रतिनिधिः स्ना. त. पैठी । "काण्डं नालम्" रघु. पुच्छकाण्डात् दक्षिणेऽस्थिति कात्या., 25 6, 5 पुच्छं काण्डमिव नालरूपत्वात् । स्तम्बे (गुल्मभेदे) "काण्डात् काण्डात् प्ररोहन्ती" यजु. 12-14 "महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलम् "सुश्रु. स्कन्धे" इक्षुकाण्डानि या कृष्णसर्वेण दंशयित्वा भक्षयेत् "दूर्व्वेन्दीवरनिस्त्रिंश द्रारिष्टशकरकाण्डमन्यतमवर्षः "सुश्रु. "उद्भिजाः स्थावराः सर्वे बीजकाण्डपुरोहिणः' ' "बीजकाण्ड-रुहाण्येव प्रताना वल्य एव च" मनुः गुत्थपरिच्छेदे । मधुकाण्डं श्राद्धकाण्डम् । (1961 - पृ.) काण्डो वेदभागः यथा — काण्डर्षिः काण्डस्य वेदभागस्य ऋषिः तदधिकारेण विचारकः[1] । वेदभाग-मीमांसके जैमिन्यादौ त्रिकः । तत्र कर्मकाण्डमीमांसकजैमिनिः तेन हि अथातो धर्मजिज्ञासा इत्यादिसूत्रजातेन कर्मकाण्डस्य विचारः कृतः । काण्डः पु. क्वी., (कनी दीप्तौ) 'न्मन्ता ड.' 'क्वादिभ्यः कित्' अनुनासिक्यस्येति दीर्घः) अर्वा, कुत्सितः बाणः । विषये[2] काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः । सविषं काण्डमादाय

1. वाचस्पत्यम्, 1860-61 पृ. = : हलायुधकोशे, पृ. = 217 ।
2. इति भारते, 13/5/3 ।

मृगयामास वै मृगम् । नालम् (579) प्रस्ताव (867) वृन्दः समूहः कुत्साः, दण्डः, "पृषता वरत्राकाण्डेनाहन्ति" वरत्रा काण्डेन वंशदण्डेन[1] इति कर्कः । जलं, वारि, तास्तु[2] गत्वा परं तीरमवरोप्य च तं जनम् । निवृत्ताः काण्डचित्राणि, काण्डे जले, चित्राणि चित्र गमनानि लघुत्वात् क्रियन्ते स्मेत्यर्थः इति तट्टीका । शरवृक्षः, वर्गः एकजातीयसमावायः 'क्रिया[3] काण्डेषु निष्णातो योगेषु च कुरुद्वहः । परिच्छेदः इदं[4] प्राप्तमुत्तमं काण्डमस्य यस्माल्लोकात् परमेष्ठी समाप[5], तृणादिगुच्छः दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला । कणशब्दे + ड बाहुलकात् - दीर्घः काण्डः ।

हिन्दीविश्वकोषे — कर्मकाण्डम् — कर्मणां कर्त्तव्यता प्रति-पादकं काण्डम्, वेदांशः (ये यज्ञयागादिकं कारयति येन च कर्म कर्त्तव्यताप्रतिपादको वेदांशोऽधीतश्च । स कर्मकाण्डीत्यभिधीयते ।

## "कर्माशयः"

कर्माशयः कर्माङ्गशेरतेऽस्मिन्निति कर्माशयः । शुभकर्माणि - अशुभकर्माणि च कर्मानुष्ठाने समुद्भूतः चेतसि - अदृष्टादृष्टरूपोऽयं जनाः धर्माधर्मौ उत पुण्यपापे - इत्युदीरयन्ति य (अदृष्टविशेषः) क्लेशमूलः - अविद्या, अस्मदादीन् क्लेशयति । अर्थात् क्लेशजन्य-त्वात् क्लेश इत्युच्यते । स अदृष्टादृष्टरूपेण ज्ञातव्यो वेदनीयो वा । कश्चिद् धर्माधर्मरूपेण वेदनीयः । अर्थाद् अस्मिन् जन्मनि सुखयति दुःखयति च । कश्चिददृष्टजन्मना ज्ञातुं शक्यः । अर्थाज्जन्मान्तरे स जनं पीडयति दुःखयति च । शुभाशुभकर्मजन्योऽधर्मो धर्मश्च यावत् फलं न प्रयच्छति तावत् चेतसि विद्यते । अत एव कर्मणः - आशयो वासनारूपत्वाच्च धर्माधर्माश्च कर्माशयशब्देन व्यवह्रियते ।

---

1. कात्यायनश्रौतसूत्रे, 8/7/27 ।
2. इति रामायणे, 2/89/10 ।
3. इति भागवते, 4/24/9 ।
4. इति अथर्ववेदे, 12/3/45 ।
5. इति भट्टि, 5/18 ।

उक्तधर्माधर्माभ्यां पुरुषः सुखं दुःखं चाधिगच्छति तयोः सुख-दुःखयोः क्लेश इति संज्ञा वर्तते । बुद्धेः पुरुषस्य चाविवेकरूपया अविद्यया शुभाशुभानि कर्माणि प्रजायन्ते अर्थात् शुभाशुभैकर्मभिः धर्माधर्मयोरुत्पत्तिः तया धर्माधर्मोत्पत्तया मानवः सुखदुःखं चानु-भवति । एवं धर्माधर्माख्यः कर्माशयः अविद्यादिक्लेशमूलकत्वात् क्लेशप्रदः प्रतीयते । वस्तुतः क्लेशप्रदः सर्वेषां मूलभूता उत्पत्तौ कार्यसाधने निष्पादने वा । पूर्वोक्ता अविद्या - अस्मितादिरेवास्ति । तत्र चेतसि पुण्यापुण्यकर्माशयः कामक्रोधलोभोत्पादकः गीतायामपि भगवता श्रीकृष्णेन प्रतिपादितं [1]सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते । प्रसङ्गात् - संशयशब्दार्थं विशदीकरोमि । सङ्गाद्-धर्माधर्मपुण्यापुण्यसङ्गत्या कामोत्पत्तिः कामात् क्रोधः प्रजायते । तदनन्तरं लोभादीनामपि उत्पत्तिर्भवति । कामलोभादयो वक्ष्यमाणरीत्या । [2]क्लेशरूपाः कर्माशयजनकाः । अतोऽविद्या-दिरेव क्लेशमूलकः कर्माशयः उच्यते । पूर्वोक्तस्य कर्माशयस्य च भेदद्वयं वर्तते । सः पुण्यरूपः पापरूपश्च कर्माशयः द्विधा । दृष्ट-जन्मवेदनीयोऽदृष्टजन्मवेदनीयश्च । अर्थात् केचित् कर्माशयाः अस्मिन् जन्मनि एव फलदाः भवन्ति । केचिच्च जन्मान्तरे फलदाः भवन्ति । तत्र तीव्रसंवेगेन अर्थाद् अत्युग्ररूपेणानुष्ठितानां मन्त्रतपः समादिभिः सम्पादितानां कर्मणां द्रुतमेव फलं लभते पुरुषः । अथवा — ईश्वरदेवतामहर्षिमहानुभावानामाराधनेन सद्यः वर्तमानजन्मनि एव मानवो लभते फलम् । यथा कश्चित् पुरुषः कस्यचित् पुरुषस्य प्राणवियोगानुकूलं व्यापारमारभते । स तुर्णमेव तज्जन्यं फलमनुभवति प्राप्नोति च । एवं हि शुभानि कर्माणि यदि उग्ररूपेण विहितानि तान्यपि क्षिप्रफलदायकानि भवन्ति । अतस्तं दृष्टजन्मवेदनी-योऽदृष्टजन्मवेदनीयश्च कथ्यते ।

---

1. श्रीमद्भगवद्गीता, अ. । २, श्लो. ६२ ।
2. पातञ्जलयोगदर्शने प्रथमपादे द्वादशतमे सूत्रे - द्रष्टव्यम् ।
“ क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ” इति ।

दृष्टजन्मवेदनीयपापरूपः कर्माशयः यथा— (भीतिव्याधि-कृपणेषु) भयसन्त्रस्तं व्याधिना पीडितं दुःखान्तरेण दुःखितं जनं यदि कश्चित् पुनः पीडयेत् तीव्रक्लेशेन – अतिदुःखयेत् – उत विश्वासोपगतेन सह विश्वासं घातयेत् अर्थात् तं वञ्चयेत् । अथवा महानुभावैः तपस्विभिश्च सह पौनःपुन्येन अपकारं कारं कारं मानवो द्रुतं तज्जन्यफलमश्नुते । एवं विधः पापरूपः कर्माशयः सद्यः प्रति-फलति यथा नहुषः इन्द्रपदं प्राप्तः । अर्थाद् दिवि देवानामिन्द्रो बभूव[1] । तेन एकदा स्वशिविकायां भारवाहकरूपेण ऋषिर्नियोजितः । यदा भारवहनानभ्यासेन मन्दं मन्दं चचाल । तदा देवेन्द्रपदमदमत्तेन नहुषेण पादप्रहारेण ऋषि र्बोधितः सर्प सर्प एवमुक्तः ऋषिणा सर्पो भव इत्युक्तः । तत्कालमेवात्युग्रऋषेरपमानरूपेण पापेन देवेन्द्रपदात् पतितः । तिर्यग्योनिं प्राप्तः, अर्थात् सर्पो बभूव ।

[2]तीव्रपुण्यरूपः कर्माशयः – यथा १. नन्दीश्वर[3]कुमारेण शिलादमुनिसुतेन, धूर्जटेरुग्रसेवा विहिता तत्सवया महादेवं तुतोष । सन्तुष्टान्मृत्युञ्जयात् देवपदं प्राप्तः । अहो अयं – उग्रतपो महिमा यत्पदं तेनाधिगतं तत्पदं बहुकालसाध्यं बहुतपःसाध्यं चासीत् । तत्तीव्रसंवेगेन लब्धम् । प्रसङ्गतो यः कर्माशयः दृष्टजनवेदनीयो नैव स तु केवलं अदृष्टजनवेदनीय एव अस्ति । तद्विषये किञ्चिद् वच्मि । अर्थात् तं दर्शयिष्यामि — तत्रेति – तत्र दृष्टजन्मवेदनीयादृष्टजन्मवेदनीयः कर्माशयो नारकिकानां दृष्टजन्मवेदनीयो न सम्भवति कर्माशयः । अर्थाद् यैः कर्मभिः रौरवकुम्भीपाकादीनां नरकानां प्राप्तिर्जायते । तत्कल्मषकदम्बकारकाः नराः नारकिकाः उच्यन्ते । तेषामधर्म-रूपाणि कर्माणि सन्ति ते दृष्टजन्मवेदनीयानि नैव भवितुमर्हन्ति ।

---

1. महाभारतस्य अनुशासनिके त्रयोदश पर्वणि शतमध्याये इयं कथा द्रष्टव्या ।
2. इयं कथा शिवपुराणस्य सनत्कुमारसंहितायाः पञ्चाधिकचत्वारिंशदध्याये द्रष्टव्या ।
3. पातञ्जलयोगदर्शने, 192 तः 194 पृ. यावत् ।

अर्थाद् एतदेव पुनः स्पष्टयति वर्तमानजन्मनि तेषां कर्मणां प्राप्ति-रसम्भवा न भवतीत्यर्थः, यतो हि सह प्राणि वर्षाणि यावद् उपभोग-योग्यानि वेदनादीनि दुःखात्मकानि ।

शतवर्षायुषः पुरुषः मानवीये शरीरे कथं भोक्तुं प्रभवति । अत्रान्तरे कर्माशयो दृष्टिजन्मवेदनीयो नैवेति व्यनक्ति क्षीणेतिं — यथा नारकिकानां दुष्टजन्मवेदनीयो नास्ति । एवं हि क्षीणक्लेशानां ज्ञानदग्धकल्मषाणां योगरतानां परमतपस्विनां योगिनामदृष्टजन्म-वेदनीयः कर्माशयो जातुचिदपि न भवितुमर्हति । अर्थाद् येषां अविद्यादिक्लेशक्रियायोगबलेन तनुतामधिगत्य प्रसंख्याग्निना दग्धीभूतानि भस्मतां गतानि कर्मकलापानि तेषां ज्ञानयोगिनां क्षीणक्लेशा इति संज्ञा । अर्थात् त एव ज्ञानयोगिनः क्षीणक्लेशाः जनैरुच्यन्ते । तेषां यानि धर्मकर्माणि न तानि अदृष्टजन्मवेदनीयानि तेषां कृते जन्मजन्मान्तरेष्वपि तत्फलप्राप्तिर्न भवतीत्यर्थः । यतो हि तेषां जन्मान्तरे यानि यान्यारम्भककर्माणि सन्ति । तानि प्रसंख्यानाग्निना दग्धानि । पातञ्जलयोगदर्शनभाष्यकारेण यः पुण्यापुण्यरूपः कर्माशयः कामक्रोधलोभमोहप्रभव इत्युक्तः । तस्यायमभिप्रायो यत् कर्माशयः क्लेशमूलक इति । यतो हि पूर्वोक्ता-विद्यापञ्चक्लेशानां कामलोभमोहक्रोधनामपरं नामेति । यथा मोहस्यार्थोऽविद्या - अस्मिता । कामस्यार्थः रागः, क्रोधस्यार्थो द्वेषो, लोभस्य चार्थोऽभिनिवेशः । अस्मात् कामलोभप्रभव इति कथने सङ्कोचो न विधेयोऽविद्यादिपञ्चक्लेशप्रभव एव ज्ञातव्यः । एतदवश्यमवधेयं यद् इच्छारूपकामलोभाभ्यां काम्यकर्माणि प्रवृत्तिर्जायते यथा प्रवृत्तया स्वर्गादिसुखजनको धर्मः उत्पद्यते । एवं हि कामलोभाभ्यां परं द्रव्यापहरणादिनां (तस्करादिकर्माशुभकर्मणा नरकादिदुःखजनकोऽधर्मः उत्पद्यते । अतः कामः लोभोद्भवौ क्लेशौ पुण्यापुण्ययोः कर्माशयोः हेतू स्तः । यदा अधर्मे धर्मबुद्धिस्यात्तदा तस्य मोहसंज्ञा भवति । जनैश्च मोह इत्युच्यते ।

एवंविधेन मोहेनैवाधर्मरूपहिंसादौ धर्मबुद्ध्या प्रवृत्तिर्भवति सति – अधर्मः उत्पद्यते । धर्मो नैव । अस्मात् कारणात–मोहरूपः क्लेशः केवलमधर्मस्य हेतुरस्ति, धर्मस्य नैव । एवं क्रोधोऽपि ब्रह्मवधादेर्हेतुरस्ति । परन्तु कुत्रचित् – जातुचिच्च क्रोधोऽपि धर्मस्य हेतुर्भवतीति दृश्यते ।

यथा[1]—एकदा सुनीतिपुत्रो ध्रुवः स्वपितुरुत्तानपादभवनं प्रसाद-मिति वा अगमत् । तत्र[2] गत्वा पितुरङ्के उपविवेश । तमुपविष्टं विलोक्य विमाता सुरुचिः चुक्रोध उवाच च । ममोदराल्लब्धजन्मा यदा भविता । तदाऽस्मिन्नङ्के उपवेष्टुमर्हो भविष्यसि । इत्थं क्रोधाग्निना दह्यमानया रक्तनयनया तया – अपमानितः तद्वशीभूतेन पित्राऽपि अपमानितः उत्सङ्गाच्चोत्थापितः । रुदन् ध्रुवो मातुरन्तिके जगाम जगाद च सकलं वृत्तान्तम् । अपमानजन्यमन्युनारण्यं वव्राज तत्र चोग्रं तपः अनुष्ठानं च चकार । येन तेनैवंविधं पदं लब्धं धर्मश्चाधिगतः । अद्यत्वेऽपि स सर्वोपरि विराजमानो दरीदृश्यते । अस्माद्धेतो धर्माधर्मौ द्वावेव कर्माशयोः हेतू स्तः । इत्थं केन क्लेशेन कः को धर्माधर्मश्चोत्पद्यते तदपि वेदनीयम् । परं विज्ञानभिक्षुणा "नारकाणां नास्ति दृष्टादृष्टजन्मवेदनीयः कर्माशयः" अस्य भाष्यस्यार्थोऽनेन विधिना कृतः यत् नारकिकाः पुरुषाः साधनसामग्रीविहीनाः कर्मानुष्ठानं कर्तुमप्रभवोऽतस्तेषां कर्माशयः दृष्टजन्मवेदनीयो नैवास्ति स्वर्गीयपुरुषाणां च स्वर्गे कर्मोपयोगिमानवशरीराभावेऽपि ते लोकाः लीलामानुषविग्रहं सन्धार्य प्रयागादिषु तीर्थेषु कर्मानुष्ठानं कुर्वन्तीति । अतस्तेषां दृष्टजन्मवेदनीयः कर्माशयो भवितुमर्हति ।

अत एव भाष्यकारेण केवलं तेषां नारकीयपुरुषाणां दृष्टजन्म-वेदनीयः कर्माशयो निषिद्धः । एतत्तेषां व्याख्यानं सूत्रभाष्याभ्यां विरुद्धत्वादुपेक्षणीयम् । यतो हि सूत्रकारभाष्यकारौ केवलं पुरुषकृतौ

---

1. पातञ्जलयोगदर्शने, पृ.= 193 – 194 ।
2. श्रीमद्भागवते चतुर्थस्कन्धेऽष्टमाध्यायेऽपि लिखितम् ।

स्वर्गनरकजनकौ पुण्यापुण्यौ क्लेशमूलकौ कर्माशयौ तथा दृष्टादृष्ट-जन्मवेदनीयां प्रतिपादयितुं प्रवृत्तौ, न तु देवादिसाधारणान् कर्माशयान् । अत एव भाष्यकारेण मनुष्यशरीरधारिणो नन्दीश्वरस्य नरशरीरधारिणो नहुषस्य च कर्माशयः दृष्टजन्मवेदनीयः इत्युदाहरणरूपेणोपन्यस्तः । न तु देवशरीरधारिणा इन्द्रकृतकर्माशयः । अन्यथा यदा इन्द्रादयोऽपि मानवीयविग्रहं धारयन्ति कर्माणि च कुर्वन्ति तदा तान्येव कर्माणि दृष्टजन्मवेदनीयानि उद्धर्तुमुचितानि । संल्लब्धदेवेन्द्रपदस्य मानवदेहधारिणो नहुषस्य कृतकर्मणो वर्णनं मुधा एव ।

यदा[1] नरकवासिनः प्राणिनः साधनाभावात् कर्म कर्तुमसमर्थास्तदा तेषां कर्माशयेषु दृष्टजन्मवेदनीयतायाः निषेधो भाष्यकारस्य न सङ्गच्छेत् ? क्षीणक्लेशानां ज्ञानिनां योगिनां सकाशं नरकानामपि नरकहेतूनि यानि कर्माणि तानि ग्राह्यानि उचितानि च । अतः मनुष्यकृतयोः स्वर्गनरकयोः जनकौ पुण्यपापरूपौ कर्माशयौ एव क्लेशमूलकौ तथा दृष्टादृष्टवेदनीयौ स्तः । एवं नरकजनको यो नरकप्राप्तेः पूर्वः कर्माशयः सदृष्टजन्मवेदनीयो न, अपि तु अदृष्ट-जन्मवेदनीय एव नरके नारकीयशरीरकृतकर्माशयो न, यतो हि तत्र कर्माभावः । अतः विज्ञानभिक्षोः कल्पना नादरणीयेति ।

शङ्का सञ्जायते यद् धर्माधर्मौ कर्माशयौ अविद्यामूलकौ विद्योत्पत्तौ अविद्यायाः नाशे सति करणाभावे नूतनकर्माशया नोत्पद्येत परमनादिकालः समायाति जन्मजन्मान्तराणि सञ्चितानि पाकविपाक-कालासंख्यानि कर्माणि विद्यन्ते । तेषां भोगेन नाशोऽशक्यः । अतः विद्योत्पत्तावपि कर्मसु विद्यमानेषु जननमरणरूपसंसारस्योच्छेदोऽशक्यः । अस्य प्रश्नस्येतत्समाधानं वर्तते । सति मूले इत्यादि — अत्र विपाकशब्दो फलार्थपरकः अर्थाद् यो शुभाशुभौ कर्मजन्यौ धर्माधर्म-

---

1. पातञ्जलयोगदर्शने 194 पृ. सति मूले तद् विपाको जात्यायुर्भोगः ।

रूपौ कर्माशयौ सुखदुःखयोः साक्षात्काररूपौ स्तः । जातिशब्दस्तु जन्मपरको वर्तते । आहो देवत्वमनुष्यत्वपशुत्वाद्युत्तममध्यमाधम-रूपाः जातयः । आयुश्शब्दः जीवनकालपरकोऽर्थात् प्रारब्धानुसारं नियतं कालं यावत् पिण्डप्राणयोः सम्बन्धः । भोगशब्दस्य तु इन्द्रिया-दिभिः सुखदुःखसाक्षात्कारोऽर्थः । धर्माधर्मयोः मूलभूतकारण-योरविद्यादिक्लेशयोः विद्यमानयोः धर्माधर्मरूपयोः कर्माशयोः सुखदुःखफले भवतः । तानि फलानि त्रिविधानि — जात्यायुर्भोग-रूपाणि उत्पन्नायां विद्यायां यदा कर्माशयाऽविद्या नाशमेति तदा छिन्नमूलो कर्माशयो जन्मादिसंसारं नोत्पादयति । एवं संसारस्योच्छेदो भवति । अतः संसारस्योच्छेदः शक्याशक्यौ नैव । उपर्युक्ता शङ्का परास्ता । विद्यमानेष्वविद्यादिक्लेशेषु धर्माधर्मरूपौ कर्माशयौ फलदौ भवतः । यथा स तुषाः अदग्धबीजास्तण्डुलाः तण्डुलोत्पादने प्रभवाः भवन्ति ।

तथा तुषविहीनाः दग्धबीजाश्च तण्डुलोत्पादनेऽसमर्थाः । एवं हि अविद्याक्लेशसहकारीकरणसम्बद्धौ धर्माधर्मौ रूपौ कर्माशयौ जन्मादिरूपाङ्कुरोत्पादने समर्थौ न तु क्लेशरहितौ । एवं विपाको जात्यायुर्भोगभेदे न त्रिविधः सुसिद्धः सुसम्पन्नश्च । प्रसङ्गवशादिदमत्र विचार्यते किमेकमेव कर्म - एकस्य जन्मनः कारणमुत एकं कर्मानेकं जन्म - आक्षिपति, अर्थात् फलदातुमुत्पादयति फलभोक्तुमिति वा । एवं कर्मस्थिरीकर्तुं जन्मनः एकत्वमेनकत्वविषयकं विकल्पद्वयं कृतम् ।

अपरो विचार इत्थं वर्तते किंमनेकानि कर्मणि अनेकानि जन्मनि रचयन्ति । आहो - अनेकानि जन्मानि - एकं जन्मोत्पादयन्ति । एवमनेककर्म स्थिरीकृत्य जन्मानेकत्वमेकत्वविकल्पद्वयं सम्भवति । उभयोर्योगकृते सति चत्वारो विकल्पाः सञ्जायन्ते । तेषु चतुर्षु विकल्पेषु प्रथमविकल्पनिराकरणं क्रियते । एकं कर्म एकस्य भाविजन्मनो न कारणम् । यतो ह्यनादिकालजन्मार्जितानां सञ्चितानां फलभोगादिविशिष्टानामसंख्यानां प्राक्कृतानां पूर्वजन्म-

विहितानामैहिकलौकिककानां साम्प्रतिकानामित्यर्थः फलक्रमाभावाद् अनाश्वास उत्पद्येत प्राक्तननूतनेषु कर्मसु कतमं कर्म पूर्वं फलं प्रदा-स्यति ? सोऽनाश्वासोऽनिष्टाय कल्पते, अर्थान्न कस्मै रोचते । यतो हि - उक्तविश्वासाभावात् कस्यचिदपि पुरुषस्य कर्मानुष्ठाने प्रवृत्तिरसम्भवा न भविष्यतीत्यर्थः ।

भावोऽयं वर्तते ते यदि पुराकृतेभ्योऽसंख्यो जन्मभ्यः एकं जन्मारभेत तदा द्वितीयो विकल्पो निराक्रियते । यदि पुरा कृतेभ्यः जन्मजन्मान्तरसञ्चितेभ्यः साम्प्रतिकेभ्यश्च कर्मभ्यः एकमेव कर्मफलं वितरेत्, तर्हि - इतराणि पूर्वजन्मसञ्चितानि वर्तमानकालकृतानि विपाकाभावाद् उपयोगाभावात् - फलदानाभावाच्चावशिष्टानि कर्माणि प्रणक्ष्यति विनश्येयुरपरमपि अनिष्ट एवास्ति । कथनस्यायमभिप्रायो वर्तते यथा लोके कस्यचिद् वस्तुनः प्रयोगोपयोगो वा न भवेत्, तद्वस्तु प्रणश्यति । अवश्यकता एवाविष्कारस्य जननी इति । एवं यदि अस्माकं बहूनि जन्मानि पूर्वजन्मसञ्चितानि वर्तमानकालवृतानि च दीर्घतमकालफलं वितरेयुस्तदा जनानां नूतने कर्मानुष्ठाने प्रवृत्तिर्न भविष्यति । ते इत्थं सञ्चिन्तयिष्यन्ति यदस्माकमिदानीं यावद् - बहुलानि कर्माणि - अवशिष्टानि सन्ति, यदेषां नाशो भविता । तदा कर्मानुष्ठानि वयं करिष्यामः । अयमपि महाननिष्टः ।

यतो हि स मनसि चिन्तयति यत् - यत् कृते एतदेव जन्म निश्चितमिति मत्वाऽन्यस्मिन् कर्मणि कर्मानुष्ठानेत्यर्थः तत्प्रवृति-र्भविष्यति । यथा केनचित् जनेन प्रभूता मत्स्याः व्यापादिताः भक्षिताश्चानुदिनमेतदेव कर्म करोति । स चेतसि चिन्तयति भाविजन्मनि जन्मान्तरेषु चाहं मत्स्यजन्म एव विन्दिष्यामि । अतो नान्यानि कर्माणि करिष्यामीति भावो निर्गलितार्थश्च । अर्थाद् एकस्मिन् जन्मनि जन्मजन्मान्तरेषु विहितानां कर्मणामेककाला-वच्छेदेन भोक्तुं मानवोऽप्रभुरिति जन्मस्त्वे कर्मस्त्वमित्यन्वयः ।

जन्माभावे कर्मानुष्ठानाभाव इति व्यतिरेकः। एवमनाश्वाससिद्ध एवास्ति ।

सम्प्रति तृतीयविकल्पस्य निराकरणंक्रियते — अनेकानि जन्मानि अनेकेषां कर्मणां न चानेकानि कर्माणि - अनेकजन्मनां कारणानि भवितुं सम्भवन्ति । अतः क्रमेणैव फलं दातुं प्रभूनि सन्ती वाच्यम् । एवं कथनेन पूर्वदोषस्य प्रसक्तिर्भविष्यतीति ।

पूर्वस्मिन् पक्षेऽस्माभिरेतत्प्रतिपादितं यद् एकेनैव कर्मणा - एकमेव जन्म भवति । कर्मानुष्ठानेऽनाश्वासरूपो दोष उक्तः । स एव समेष्यति ागिष्यति वा । अतः तृतीयो पक्षोऽप्यसङ्गत एव । कथन-स्यायमभिप्रायः पुरा कृतानि जन्मजन्मान्तराणि कर्माणि एकस्मिन् जन्मनि फलं वितरेयुः यदा अविशिष्टानि साम्प्रतिकानि नूतनानि वा कर्मणि फलं प्रदातुं प्रभवेयुस्तदा कर्मानुष्ठाने प्रवृत्तिर्भवेत् । परन्तु एकस्मिन् जन्मन्यसंख्यानां जन्मनां सम्भावना नैव भवितुमर्हति ।

अतः पूर्वपक्षोक्तं दूषणं गले पतितमेव । एवं पक्षत्रयं निराकरणं जातम् । अधुना चतुर्थं पक्षं प्रतिपादयामि—तस्माज्जन्मप्राप्त्यनन्तरम् अतः आजन्मनोऽवसाधनन्तो विहितः कर्माशयो विचित्रो वर्तते अर्थात् सुखरूपं दुःखरूपं च फलं प्रदातुं विलक्षण इति । गौणप्रधानरूपेण फलं प्रयच्छति । गौणकर्माशयो विलम्बेन फलदोऽस्ति । प्रधानकर्माशयस्तूर्णं फलं वितरति । निधन-कालेऽभिव्यक्तीभूय, एकस्मिन्नेव काले मिथः सम्मिश्री, सङ्घी च सम्भूय निष्पाद्य निधनं जन्म एकं निष्पादयति । अर्थाद् एकमेव जन्म करोति न नानेकानीति - अन्तिमोऽयं पक्षः सुदृढ़ीभूतः । तेनैव च कर्मणा कालभेदेन जीवनरूपे आयुष्यमान् जायते । तस्मिनायुषि तेनैव कर्मणा सुखरूपं दुःखरूपमधिगच्छति ।

अतोऽसौ कर्माशयो धर्माधर्मरूपजन्मायुर्भोगहेतुत्वात् त्रिवि-पाकोऽभिधीयते । अर्थात् जातिरूपं आयुष्यरूपं भोगरूपं च फल-त्रयप्रदानादयं त्रिविपाकः इत्युच्यते । अस्मात् कारणदेकभविको

निखिलः सम्मिश्रीभूय एकं जन्मारभते । एकभाविकः कर्माशयः पुण्यपापरूपः उक्तः । अयमेवैकभाविकवाद इत्युच्यते । पुनः एकभाविकस्य कर्माशयस्य सामान्यविशेषरूपेण भेदद्वयं भवति । तेषु यो जात्दुर्भोगरूपः फलत्रयस्य हेतुर्वर्तते सत्रिविपााकत्वात्तस्य सामान्यतां भजते । यश्च जातिभोगरूपस्य फलद्वयस्य हेतुरस्ति । सद्विपाकत्वाद्विशेषरूपेण उक्तः । तेषु सामान्यत्रिविपाक एकभाविकः कर्माशयो विद्यते । तत्स्वरूपं प्रतिपाद्य सम्प्रति द्विपाकैव भाविकविपाकयोः स्वरूपं प्रतिपादयामि । यस्तु दृष्टजन्मवेदनीयः कर्माशयः पूर्वोक्तः स नहुषभूपवदेकभोगरूपफलप्रदानत्वाद् एकविपाकारम्भ इत्युच्यते । यश्च नन्दीश्वरवद्भोगायुर्फलप्रदो वर्तते स विपाकारम्भकर्माशय इति । [1]अर्थात् तेनावर्षायुषि एवं श्रीमतां महादेवमाराधनविधाय पुण्यविशेषार्जनं विहितं यत् प्रभावेणामरत्वपदं दिव्यभोगरूपं फलद्वयं लब्धम् । जाते फलं नैवाधिगतम् ।

यतो हि जातेर्लाभस्तु पूर्वकर्मणामेव लब्धस्तेन । अतोऽयं कर्माशयद्विपाकारम्भनामा इति । नहुषनरेशेन पार्ष्णिप्रहारेण ऋषि-कुमारस्य ताडनं विधायाधर्मलाभो लब्धः । येन दुःखरूपो भोगोऽधि-गतस्तेन न जाते फलं विन्दितं न चायुर्लाभो लब्धः । तत् फलन्तु तेनेन्द्रपदमधिगत्य एवानुभूतम् ।

अत एवं विधः कर्माशयः फलैकप्रदानत्वादेकविपाकारम्भोऽ-भिधीयत इति । अनेनैतद् दृढीभूतं यददृष्टजन्मवेदनीयो कर्माशयो विद्यते स त्रिपाकारम्भोऽस्ति यश्च दृष्टजन्मवेदनीयकर्माशयः स कुत्रचिदेकविपाकारम्भः कुत्रचिद्विपाकारम्भः सम्प्रजायते । सम्प्रति शङ्का सञ्जायते यच्छुभाशुभकर्मजन्यपुण्यापुण्यकर्माशयो हि - एकभाविकः - उत कर्मफलजन्यभोगानुकूलक्लेशवासनाऽपि यद्-युक्तवासनापि - एकभाविकाः स्यात्तदा मानवदेहानन्तरं पशुशरीर-

---

1. पातञ्जजलयोगसूत्रे, पृ. = 199. ।

मवश्यम्भावि एव, तदा पाशवीयो भोगो न भवितुमर्हति । यतो हि तस्मिन् पाशवीयभोगानुकूला वासना नैव विद्यते ? । वासना च विना भोगं नैव लभ्यते । अस्या: शङ्काया: समाधानं भाष्यकारणैवं विहितम् ।

[1]अभितो ग्रन्थिभि: सङ्ग्रथितं मीनजालसङ्काशक्लेशकर्म-फलजन्या तु भववासनया इदं चित्तमनादिकालिकासंख्यजन्मत: एकलौलीभावसमन्वितमेवं चित्रसङ्काशसङ्ग्रथितम् । अत: इमा: वासना: एककालिका: न, अपि तु अनेकजन्मजन्मान्तरीयवासना-वासितो जन्तुर्जन्मजन्यार्हान् भोगान् प्राप्नोति । कथनस्यायमभिप्राय: कर्माशय: एक भाविक: वासनात्वानेकजन्मजन्मात्तरीया: अनेका इत्यर्थ: ।

अतो मनुष्यशरीरानन्तरं जन्तु: पशुयोनिं निसेवते । पूर्वयोनौ पाशवीयो भोगो यस्तेनानुभूतस्तज्जन्यवासनया तज्जन्मनि पशुभोगान् भुनक्ति सा । अतोऽत्र नास्ति दोषलेश इति । पुनरुत्पद्यते शङ्का यदियं शुभाशुभकर्मजन्या वासना एवं धर्माधर्मरूप: कर्माशयो वर्तते । तदा कर्माशयं विना भवतामभिमता वासना काऽस्ति ? यद् - या श्रीमद्भिरेकभाविका नाङ्गीकृता । कर्माशयश्चेकभाविक: स्वीकृत: । अस्योत्तरं भाष्यकारेणैवं दत्तम् । ये संस्कारा: स्मृतिहेतव: श्रीमद्भिरभिहिता: ता: वासना: सन्ति । अनादिकालता जन्मजन्मान्तरेभ्य समागच्छन्ति प्रचलन्ति वा । अतो मानवो मानवशरीरतो यदा पाशवीयो योनिमेति तदा पूर्व(प्रथम)भुक्तां पशुयोनिं तत् स्वभावं च न त्यजति तदनुसारं तस्यां योनावपि तदुचितान् भोगान् भुनक्ति । यश्च कर्माशय स स्मृतिहेतुर्न विद्यते । अतो न ता: वासना: इत्युच्यन्ते वासनाश्च तेभ्यो भिन्ना एव अनेकभवं यावद् विद्यमाना: सन्ति । अनादिकालीना: वासना:

---

1. क्लेशकर्मेति ।
सर्वग्रथितं मत्स्यजालमित्यादि ।

स्युरिति कथनेन यदि वासनाभिरेव भोगो भवति तदा सर्वप्रथमजन्म-समुद्भूतं, तस्मिन् जन्मनि वासनाऽभावेन भोगः कथं भुक्तः इयमपि शङ्का निरस्ता । यतो हि यदि वासनाः अनादिकालीनाः, तर्हि जन्मान्यपि अनादीनीति सिद्धम् । अतः सर्वप्रथमजन्म तथा तज्जन्यवासनाः इमानि निखिलान्युत्तराण्येव यो धर्माधर्मरूपो कर्माशयावेकभाविकावुक्तौ तावेकभाविकावेति नावधारणीयमेतत् स्पष्टयितुं रचयंति भूमिकां भाष्यकारः[1] । यो वासनया भिन्नः एकभाविकः कर्माशयः स द्विविधः — नियतविपाकोऽनियतविपाकश्च । यो नियतविपाकः नियमपूर्वकोऽवश्यफलदोऽनियतविपाकोऽनियमपूर्वको फलदः ।

अनेन प्रकारेणा भेदद्वयं वर्तते । तत्रेति तयोर्द्वयोः कर्माशययोः मध्ये यो दृष्टजन्मवेदनीयः कर्माशयः स नियतविपाकः - अर्थान्नियमपूर्वकास्मिन् जन्मनि फलप्रदः स एकभावित्वनियमः । यस्तु — अदृष्टजन्मवेदनीयः कर्माशयः सोऽनियमितरूपेण फलप्रदः कर्माशयः । स नास्ति एकभाविकः । कस्मात् कारणात् स अनियतविपाकः एकभाविको न । अत्र हेतुं प्रदर्शयति ग्रन्थकारः— योऽदृष्टजन्मवेदनीयोऽनियतविपाको कर्माशयो वर्तते । तस्य गतित्रयं भवति ।

प्रथमा गतिस्तु फलमन्तरा नाशमेति । द्वितीया गतिः या वर्तते तस्याः प्रधानकर्मण्येवापगमनं भवति । अर्थात् प्रधाने विलीय मिश्रीभूय फलप्रदा जायन्ते । अतो नास्ति सा स्वतन्त्रा । तृतीया च नियमविपाकप्रधानकर्मगाऽभिभूताऽतिदीर्घकालं यावत् सुस्थिरो भवति । सम्प्रति गतित्रयस्य स्वरूपं व्यनक्ति ग्रन्थकारः । या पूर्वा गतिः, सा फलमन्तरा प्रलीयते यथा शुक्लकर्मोदयात् शुक्लानां शुभानां कर्मणामुदयात् । कृष्णानामशुभानां कर्मणां नाशो भवति । अर्थात्

---

1. पातञ्जलयोगदर्शने, पृ.= 201 ।
"साधनापादे" द्वितीये ।

शुभकर्मभिरशुभकर्मणो नाशो भवति । ये जनास्तपन्ते वेदमधीयन्ते च तेषां कल्मषकदम्बाः कृष्णकर्मरूपास्तूर्णं यान्ति नाशताम् । अस्मिन् कर्मणि कथने वा श्रुतिप्रमाणमच्छेद्यम् । यथा "द्वे द्वे हवै कर्मणी वेदितव्ये पापकस्येका राशिः पुण्यकृतोऽहन्तीत्यादि"[1] ।

पापिनां पुरुषाणां कृते भोक्तुं योग्यं कृष्णशुक्लं च दुःखजनकं कर्मद्वयं वर्तते । तत्र तद् वयं पुण्यकृतः – तपसा वेदादिस्वाध्यायेन च कर्मणः समुद्भूतः शुक्लधर्मसमूहः कृष्णकर्म (कल्मषकर्म) नाशयति । अतस्तपःस्वाध्यायरूपाणि सुकृतानि कर्माणि करणीयानि । यतो हि मनुष्यशरीरे एव कर्मानुष्ठानस्य विधानं वर्तते । नेदं मानवशरीरम्, अपि तु कर्मशरीरमनेनैव कर्माणि क्रियन्ते । अतोऽस्य मानवशरीरस्य कर्मशरीरेति संज्ञा जाता । अन्येषां देवानां पश्वादीनां च कर्मशरीरं नास्ति । तद्भोगशरीरमेतदेव ऋषयो मुनयो महर्षयो विद्वांसश्चोपदिशन्ति । श्रुतेरयमभिप्रायो वर्तते । अयोगिनां पुरुषाणां शुक्लान्यशुक्लानि (कृष्णानि) शुक्लकृष्णानि च, अर्थादुभयविधानि । एवं त्रिविधानि कर्माणि सन्ति ।

तेषु यानि शुक्लानि तानि निखिलानि सुखहेतुकानि । सुखजनकानि वा । यानि च कृष्णानि – उताशुक्लकृष्णानि तानि सकलानि दुःखजनकानि वा । यदा शुक्लानि कर्माणि जायन्ते उत्पद्यन्ते वा, तदा कृष्णानि आहो शुक्लकृष्णानि कर्माणि एवं नाशमियन्ति यथा पक्षिराजस्य दर्शनात् नागाः पलायन्ते — पलायन्ते यथा नागः पक्षिराजस्य दर्शनात् अतो जन्तुना शुभकर्मभिर्दुःखहेतुकानि कर्माणि नाशनीयानि । इदानीं द्वितीयं गतिस्वरूपं वर्णयति[2] । अदृष्टजन्म-वेदनीयविपाकरूपकर्माशयस्तु द्वितीया गतिरियमस्ति यथा प्रधान-कर्मणि ज्योतिष्टोमादौ

---

1. पातञ्जलयोगदर्शने, पृ. = 202 ।



2. द्वे द्वे वै कर्मणीत्यादि ।

पशुहिंसारूपाणि कर्माणि मिलित्वा फलदानि भवन्ति । अयं भावः – यत् प्रधानभूतेऽङ्गीयागे हिंसारूपाणि पशुहननादीनि यान्यङ्गकर्माणि सन्ति ।तेषां फलद्वयं विद्यते । एकन्तु (प्रथमन्तु) ज्योतिष्टोमादिप्रधान-कर्मणोऽङ्गत्वात् प्रधानस्य सहाय्यं करणीयमपरं " मा हिंस्यात् सर्वभूतानि"। इति वेदवाक्येन निषिद्धत्वात् — दुःखरूप-मनर्थोत्पादनम् । तेषु प्रधानकर्मणामङ्ग-रूपत्वादनुष्ठानत्वाच्च हिंसादि- कर्मणामप्राधान्यमेव । अतस्तानि हिंसाकर्माणि प्रधानात् (कर्मणः) पूर्वं तूर्णं फलं दातुमक्षमाणि । यावत् प्रधानानि कर्माणि फलदानि न स्युस्तावत् तानि (कर्माणि) प्रधानसहाय्यं कर्तुं निजमनर्थरूपफलं दातुं च बीजरूपेणावस्थितानि ।

एतदावागमनमावागमनस्य च द्वितीया गतिरिति । यदा प्रधान-कर्मणि स्वर्गफलदातुमुद्यतानि भवन्ति । तदानीमेव हिंसारूपाणि प्रधानकर्माण्यपि प्रधोपकर्तुं तेन सहैव स्वीयान्यर्थरूपाणि फलानि प्रयच्छन्ति । अस्मिन् विषये महर्षिपञ्चशिखाचार्य्येण भणितम् । यदि यागश्च जनितापूर्वे पुण्ये स्वल्पमपि पापस्य सम्मिश्रणं स्यात्, तत् स्वल्पेनैव प्रायश्चित्तेनापक्षीयते । यतो हि तत्कल्मषं स्वल्पम् । अर्थात् पुण्यतो नाधिकमित्यर्थः । यदि प्रायश्चित्तं न क्रियते, तर्हि पुण्यजन्य- स्वर्गफलेन सह दुःखमप्यवश्यं भविष्यतीति पुण्यं विनाशयितु पापं नालम् । अत्र वादी शङ्का करोति कस्मात् पुण्यद्यान्, उत्तरयति हि निश्चयेनात्र कारणमिदं वर्तते । यत् मम पुण्यं पापादधिकं विद्यते तस्मिन् इदं पापं मिश्रीभूय स्वर्गेऽप्यल्पदुःखसंवेदं करिष्यतीति । अनयोक्त्या इदं सिद्ध्यते यद् अदृष्टजन्म-वेदनीयनियतविपाकपशुहिंसादिजन्यप्रधानकर्मणो ज्योतिःष्टोमादौ प्रधानकर्माणि अवापगमनं भवति । इयमेव चोक्तकर्माशयस्य द्वितीया गतिरिति[2] ।

---

1. प्रधानकर्माण्यावागमनम् ।
2. पातञ्जलयोगदर्शनस्य, साधनपादो, द्वितीया ।

क्रमप्राप्तायाः तृतीयायाः गतेः स्वरूपं निरूपयति — अदृष्ट-जन्मवेदनीया नियतविपाकरूपकर्माशयस्य तृतीया गतिरित्थं वर्तते, यथा नियतविपाककर्मणा तिरस्कृतीभूय दीर्घकालं यावदवस्थानं भवति । अर्थाद् बलवन्ति पुण्यकर्माणि निरन्तरं फलदानि भवन्ति । इमानि निर्बलानि फलदातुमक्षमाणि पापकर्माणि पुण्यकर्मभिस्तिर-स्कृतानि दीर्घकालं यावद् वीजरूपेण तिष्ठन्ति ।

लब्धे समये निजपापकर्मसमुद्भूतानि फलान्यवश्यं वितरन्ति । लोकेऽपि इत्थं बलवति स्थिते सति निर्बलः किमपि कर्तुं न प्रभवति। उक्तिरपि वर्तते न हि सर्पसमक्षे दीपाः प्रकाशन्ते । अत्र प्रधानकर्म अङ्गी, अप्रधानमङ्गमिति न चिन्तनीयम् । परं ये न फलस्य समयोऽधिगतः तत्प्रधानं येनानधिगतः समयस्तद् अप्रधानमित्यर्थः । एवं बोधव्यम् । पूर्व तावद् उक्तं यन्मरणोत्तरं एककालावच्छेदेन निखिलानि कर्माण्यभिव्यक्तीभवन्ति चिरकालं यावच्च तिष्ठन्ति । इत्थं कथनेन पूर्वपरयोर्महान् विरोधः प्रतीयते । अनेनाभिप्रायेण शङ्कावादिनः पृच्छन्ति । एकस्मिन्नेव समये कर्माशयाः अभिव्यक्ता भवन्ति दीर्घकालं यावदवस्थिताः भवन्ति । अनयोर्विरुद्धकथनयो र्मिथः समावेशो जायत इति न सङ्गच्छते ।

कर्मस्वपि मीनमत्स्यन्यायः प्रचलति । यथा बलवन्तो महीयांसो मत्स्याः कनीयसो मत्स्यान् भक्षयन्ति स्वायत्तीकुर्वन्ति च । एवं हि बलियांसि कर्माणि लघीयांसि कर्माणि स्वायत्तीकृत्य पूर्वं स्वकीय-कर्माणि फलानि ददति । तदनन्तरमवशिष्टे समये लघुनि निर्बलानि वा कर्माणि फलानि प्रयच्छन्ति लोकेऽपि यो बलीयान् स एव सर्वविधं लाभं लभते । निर्बलानां कृते कुत्रापि पूर्वस्थानं पूर्वो लाभो न दृष्टः श्रुतो वा ।

परिवर्तिनि युगेऽपि एवंविधो व्यवहारो दरीदृश्यते । ये बलवन्त धनशालिनश्च वर्तन्ते । तेषां कृते यत्र तत्र सर्वत्र राजकीयेषु कार्यालयेषु भृत्यादिकार्यं लभते । । निर्बलानां वार्तापि न पृच्छति कश्चित् ।

पञ्चनदीयभाषायामुक्तं केनचित् कविना यथा — "दुनियां मनदी जोरां नूँ जगह नैओं कमजोरां नू" बलान्यपि बहुविधानि विद्यन्ते । धनबलं, देहबलं (शारीरिकबलं) बुद्धिबलं, पुरुषबलं चास्ति । अतो बले एव यत्नः कार्यः । सुबलवान् हि नरो लोके स्वाधिकारान् विन्दन्ति । करागतं निजं द्रव्यं निर्बलो नाधिगच्छति ।

एतदुत्तरयति — अदृष्टजन्मवेदनीयो यः कर्माशयः सनियत-विपाकस्यैव कर्मणो फलदोऽस्ति यस्तत्कृते समानमरणमभि-व्यक्तिकारणमुक्तम् । न त्वदृष्टजन्मवेदनीयं नियतविपाककर्म यद् वर्तते तन्नांक्तम् । अतो नियतविपाकाभिव्यक्तेः कारणमनियत-कर्मविपाकस्यावस्थानमिति कानि, नास्ति विरोधलेशः । अस्माद् भिन्नाः कर्मणां तिस्रो गतयो भणिताः । तासामिदानीं निश्चयः क्रियते । यस्तु अदृष्टजन्मवेदनीयो नियतविपाकरूपः कर्माशयः उक्तः । स कुत्रचित् पूर्वोक्तप्रकारेण नाशमेति । उत वायं विन्दति । आहो कुत्रचिद् बलवता कर्मणाऽभिभूतः, उपासनां कुर्वन् फलदातुं कामाश्चिरं कालं यावत्तिष्ठति । एवं तावत्कालपर्यन्तं तिष्ठन्ति यावत् तेषां बलवतां विरोधिकर्मणां फलं चरितार्थं न भवति । अथवा एवंविधं समानं कर्मान्तरमभिव्यञ्जकं प्रबलं निमित्तकर्म फलाभिमुखो न भवति । यदा उक्तं निमित्तं विन्दति तदाऽभिमुखीभूय फलं यच्छति । एतादृशस्य फलविषयकस्य देशस्य कालस्य निमित्तस्य च निर्णयो निश्चयो न भवति । इयमेव कर्मणो गतिर्विचित्रा दुर्विज्ञेया च वर्तते । अर्थाद् भोगसमाप्तेरनन्तरं यथोक्तविरोधिकर्मणामभिर्भावः कदा कुत्र भविष्यतीति । उत कस्यकित् साहाय्यं कदा लप्स्यते फलाभिमुखी भूय कर्मणि फलानि वितरिष्यतीति निर्णेतुं न कोऽपि प्रभुः क्षमो वा, अर्थान्न कोऽपीति । अत एव भगवता श्रीकृष्णेन गीतायां प्रतिपादितं "कर्मणो गहना गतिरिति" ।

उत्सर्गरूपसामान्यकर्मणामपवादरूपेभ्यो विशेषकर्मभ्यः निवृत्तिरेव कथं स्वीक्रियते । एवंविधायां शङ्कायां सत्यां भाष्यकाराः कथयन्ति —

न चेति । उत्सर्गस्य सामान्यकर्मणात्ययवाधान्निवृत्तिर्न भवति । यतो हि पूर्वोक्तया युक्त्या चिर स्थितेरनन्तरं तत् फलमवश्यं भविष्यतीति सुसिद्धमेव ।

एवमेकभाविकः कर्माशयो व्याख्यातः । भावोऽयं वर्तते यद् दृष्ट-जन्मवेदनीयोऽदृष्टजन्मवेदनीयश्च — एवं कर्माशयस्य भेदद्वयं भवति । अनेन प्रकारेण नियतविपाकस्यानियतविपाकस्य च भेदद्वयं भवति । फलमपि द्विविधमस्ति । तयोर्मध्ये दृष्टजन्मवेदनीयकर्माशयो वर्तते स नियतविपाक[1] एवं विद्यते, नत्वनियतविपाकः । अतः स एकभाविक एव, यश्चानियतविपाकः कर्माशयो वर्तते । कस्तयोर्नियत-विपाकानियतर्विपाकयोर्भेदद्वयं भवति । तयोः यो दृष्टजन्मवेदनीयो नियतविपाकः कर्माशयः स उक्ताभिव्यक्तकारणम् । चिरस्थिते-र्हेतुर्न । यश्चादृष्टजन्मवेदनीयोऽनियतविपाकः कर्माशयोऽस्ति । तस्य पूर्वोक्तेन प्रकारेण नाशरूपा वापगमनरूपा चिरावस्थानरूपं च तिस्रो गतय उक्तास्ता निखिला एकभाविकाः न सन्ति ।

निष्कर्षोऽयम् - वेदान्तग्रन्थेषु यस्यैकभाविकवादस्य खण्डनं दरीदृश्यते, स एवायमेकभाविकवादोऽस्ति । इत्थं न भ्रमितव्यम् । परं तस्मादतीव विलक्षणोऽयं योगिजनमान्यः एकभाविकवादो वर्तते । यतो हि तस्यैकभाविकवादस्यायं सिद्धान्तो विद्यते ।

एकस्मिन्नेव भवे एकमथवाऽसंख्यशरीरं सन्धार्य्य निखिलकर्म-फलभोगान् भुक्त्वा कर्माभावेन जन्माभावरूपो मोक्षः सिद्ध्यति । तत्कृते तु कष्टसाध्यज्ञानसम्पादनस्य नास्त्यावश्यकता । अस्यैक-भाविकवादस्य विशेषरूपेण विशदं व्याख्यानं हिन्दीभाषाभाषिणा स्वामिना निश्चलदासेन एव रचिते विचारसागरे द्वितीये तरङ्गे कृतम् । ग्रन्थविस्तारभयात् न लिख्यतेऽत्र केवलं दिग्दर्शनं कृतम् ।

---



1. पातञ्जलयोगदर्शन, पृ. 206 ।

एवं हि क्लेशमूलकं कर्म तथा कर्ममूलकं जन्मायुर्भोगरूपश्च त्रयो विपाकः उक्तः । इदानीं त्रयो विपाकं कस्य मूलको यत्कृते – एतद्धेयमस्ति । अस्याः शङ्कायाः समाधानं विपाकफलं लिखन् सूत्रकारो लिखति ।

ते[1] जन्मायुर्भोगरूपाः विपाकाः धर्माधर्महेतुत्वात् सुखदाः दुःखदाश्च सन्ति । अर्थाच्छुभैः कर्मभिः यज्जन्मादीनि प्राप्नोति तानि सकलानि सुखरूपाणि फलदानि सन्ति । अशुभकर्मभिश्च यज्जन्मादीन्यधिगच्छति जन्तुस्तानि निखिलानि दुःखदान्येव । एतदेव भाष्यकारः स्पष्टयति ये जन्मायुर्भोगाः सन्ति ते सम्पूर्णा एव दुःखदाः । अत्र सञ्जायते शङ्का – ये अपुण्यहेतुकाः जन्मायुर्भोगाः सन्ति ते प्रतिकूलवेदनीयत्वाद्धेयाः – भवेयुर्नाम । परं ये पुण्यहेतुकाः जन्मायुर्भोगाः ते सर्वेऽनुकूलवेदनीयत्वात् कथं परिहेयाः ।

एषां प्रत्येकस्मिन्नात्मनि – अनुभूता या अनुकूलता वर्तते । स सहस्रैरनुमानैरागमैश्च दूरीकर्तुं न शक्यते । ह्लादपरिताश्च मिथोऽविनाभूतो नैव । यत् कृते ह्लादग्रहणे नावर्ज्जनीयत्वात् परितापोऽपि गृहीतत्वाद् इमे जन्मायुर्भोगाः ह्लादकाः अपि हेयं भवितुं शक्यन्ते । यतो हि इमौ आह्लादकपरितापौ भिन्नहेतुकौ तथा भिन्नस्वरूपवन्तावपि मिथो निरपेक्षावास्तः । अतो ह्लादायुर्भोगादयो हेयाः कथमिति अत्र भाष्यकारेण समाधीयते । यथेदं दुःखमशुभकर्मजन्यं प्रतिकूलात्मकं वर्तते । एवं हि विषयसुखकाले शुभकर्मजन्यसुखभोगकाले योगिनां कृते प्रतिकूलात्मकं दुःखदायकमस्त्येव । अर्थाद् विषयसुखभोगकालेऽपि योगिनां कृते सूक्ष्मं दुःखानुसन्धानं विद्यते एव । अतो ह्लादकफलकाः जन्मायुर्भोगादयोऽपि परिहेया एव भवितुं शक्नुवन्ति । अर्थाद् भवत्येव ।

---

1. ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ।

अनेनेदं सिद्धं — "योगिनः शब्दप्रयोगो विधाय इदं दृढीकृतं प्रदर्शितं वा यद् दुःखसिन्धौ निमग्नानां मूढपुरुषाणां कृते सुखभोगकाले दुःखे विद्यमानेऽपि तस्यानुभूतिप्रतीतिर्वा न भवति । योगिनां कृते तत्प्रतीतिरनुभूतिरवश्यं भवतीति यञ्जितम् । यद्यपि जन्मायुःसुख-दुःखेभ्यः पूर्वमनयोर्द्वयोः फलं सुखदुःखे स्तः । एवं कथनमुचितं न च भोगफलं सुखदुःखमिति कथनं नोचितम्[1] ।

सुखदुःखसाक्षात्कारस्य नाम भोग इति, स च सुखदुःखा-नन्तरयत्युद्यते । यत्पश्चादुत्पद्यते तत्कारणं न भवत्यपि तु कार्यं भवति । अतः ह्लादपरितापरूपौ सुखदुःखे भोगस्य फलमिति कथनं नोचितम् । तथापि सुखदुःखसाक्षात्काररूपभोगस्य सुखदुःखविषयत्वाद् भोगस्य फलं सुखदुःखे इति कथितम् । सुखदुःखसाक्षाद्रूपभोगाद् सुखदुःखे उत्पद्येते । अनेनाकृतेनोक्तं यद्यपि विषयी पुरुषो विषयसुख-भोगकाले दुःखं प्रतिकूलरूपं न वेति तथापि योगिजनस्तज्ज्ञानाति । एतदेव स्पष्टीकर्तुं भाष्यकारसूत्रावतरणिकां विरचयति[2] ।

कथं तदुत्पद्यते ? विषयसुखकाले योगिजनो दुःखानुसन्धानं करोति सा कथा कया युक्त्या – उत्पद्यते ? एवंविधे प्रश्ने सति सूत्रकारस्तत्सूत्रेण निरूपयति[3] । परिणामजन्यं दुःखं तापजन्यं दुःखं तथा च संस्कारजन्यं दुःखम्, एतानि दुःखत्रयाणि यदा विषयसुखेन मिश्रीभूतानि भवन्ति तदा गुणनिष्ठस्वाभाविकया चञ्चलतया सदैव सात्त्विकीं सुखाकारवृत्तिं (विषयसुखम्) अन्याभिर्विरोधिवृत्तिभिः संम्मिलितत्वाद् विवेकिनां ज्ञानवतां च योगिनां दृष्टौ प्रकृतिः, तथा तत्कार्यविषयसुखं समग्रं दुःखमेवास्ति । परिणामदुःखेन तापदुःखेन, संस्कारदुःखेन च मिश्रितत्वाद् विषयसुखं दुःखरूपमेवेति सूत्रेणोक्तम् । तेषु दुःखत्रयेषु प्राथमिकं परिणामदुःखं विशदयति व्याख्यति वा ।

---

1. यथा चेदं दुःखमित्यादि ।
2. कथमिति ।
3. परिणामतापसंस्कारदुःखैरित्यादि ।

सर्वेषां प्राणिनां कृते इदं यत् स्त्रीपुत्रादिकं चैतनिकं सुखं गृहक्षेत्रादिकम् चैतनिकरूपं साधनाधीनो यो विषयसुखानुभवो जायते सोऽनुरागरूपक्लेशेनैव युक्त एवानुभवो भवति । तत्र राजजन्यः क्लेशरूपकर्माशयोऽस्ति पापमस्ति । अर्थात् कदापि नायं सम्भवो यद् इदं विषयोऽयं पुरुषाय सुखप्रदस्तु वर्तते परमस्मिनेनं रागी नैवास्ति । अयमेव नियमो येन विषये पुरुषाय सुखं जायते यद् यस्मिन् – तस्य रागोऽवश्यमेव भवति । अतः सर्वे विषयसुखानुभवः रागरूपक्लेश-समन्वितः । येन च रागेण युक्तः स सुखानुभवो वर्तते स रागः राजसत्वात् सुखसाधनयोः पुण्यापुण्ययोः प्रवृत्तिमवश्यं कारयिष्यति । अतः सुखानुभवो विषयपुण्यापुण्ययोः कर्माशयो हेतुरिति । एवं रागजन्यं सुखं पापजनकत्वात् । पापं च दुःखजनकत्वाद् विषयसुखं परिणामे दुःखरूपमेवेति सिद्धम् ।

विषयसुखे रागजन्यपुण्यापुण्ययोः प्रतिपादनान्तरमिदानीं द्वेषजन्यपुण्यं (पापं) प्रतिपादयामि[1] । तथैव सुखानुभवकाले दुःखसाधनं प्रति द्वेष्टि – अर्थात् क्रोधाद् हिंसादिकर्माणि विधाय पापमाचरति । दुःख-साधनं च परिहर्तुमसमर्थो भवति । यदा तदा मोहमधिगच्छति । अर्थात् कर्त्तव्याकर्त्तव्याविवेकीभूय कल्मषा आचरति । अतो द्वेषजन्यो मोहजन्यश्च कर्माशयः कल्मषमेवास्ति । भाष्यकारो व्यनक्ति राग-कालेऽपि द्वेषः मोहश्च तत्रैवातिष्ठति । तथैवात्रोक्तं तथैव पूर्वमपि अस्य पापस्य चतुर्थे विच्छिन्नलेशोपपादनसमयेऽप्युक्तम् । एवं वाणीप्रवृत्तिर्जन्यं पुण्यं पापेञ्च प्रदर्श्याधुना शरीरप्रवृत्तिर्जन्यं पुण्यं पापं च प्रदर्शयति[2] । प्राणिनां हिंसा विनोपभोगप्राप्तिरसम्भवः । अतः हिंसाजन्योऽपि कायिकः पापरूपः कर्माशयोऽस्ति[3] ।

---

1. तथा च द्वेष्टि सुखसाधनानि ।
2. पातञ्जल योगसूत्रे – – तानुपहत्य भूतान्युपभोगः सम्भवतीति ।
3. पञ्च सूना गृहस्थस्य चुल्लीपेषण्युपस्करः ।

मनुनाऽपि मनुस्मृतौ प्रतिपादितम्। - चुल्ली भोजनपाकसाधनम्, पेषणी पाषाणनिर्मितं अन्नदलपिष्टयोः साधनम् । उपस्करः सम्मार्जनी कण्डनी - ऊखलं मुसलं च, उदक्कुम्भः घटस्थापनस्थानमेतानि वाग् संख्याकानि पशुवधसङ्काशानि हिंसाजन्यपापस्थानानि सन्ति । यानि निजकार्ये संलग्नीकृत्य पापे नियोजयन्ति । एवं सुखानुभवकाले रागद्वेषमाह हिंसादिनां विद्यमानतयाऽग्रिममवश्यम्भविनं यत् पापजन्यदुःखं वर्तते, तदेव परिणामदुःखमुच्यते । अथात्र सञ्जायते शङ्का यत् सर्वमनुभवसिद्धं विषयसुखदुःखमिति मत्वा अपलपनं योगिनां कृते कथमुचितम् । अस्योत्तरमुत्तरयति भाष्यकारः 2।

पञ्चसु क्लेशेषु अविद्या नाम प्रथमः क्लेशो वर्तते । स यद्यपि अनन्तस्तथापि क्लेशहेतुर्या अविद्या सा चतुर्विधाऽतस्तासां चतसृणां स्वरूपं निर्देशकर्तुः सूत्रस्यावतरणिकां रचयति भाष्यकारः । उपर्युक्तेषु पञ्चक्लेशेषु प्रथमा या अविद्या तत्स्वरूपं निर्दिशति - अनित्याशुचिदुःखात्मकेषु पदार्थेषु क्रमेण या -नित्या शुचिः सुखात्मख्यातिश्च (आत्मबुद्धिः) भवति सा अविद्या इत्युच्यते । अर्थादनित्ये स्वर्गादौ पञ्चे नित्या बुद्धिः - अशुचौ शरीरादौ शुचिबुद्धिः दुःखरूपेषु विषयभोगेषु सुखबुद्धिः, तथा चानात्म देहेन्द्रियादिषु आत्मबुद्धिर्या भवति सा मिथ्याज्ञानरूपा अविद्या इत्युच्यते । सूत्रस्य विवरणं सम्यगुपस्थापयति भाष्यकारः - अनित्यकार्यरूपपृथिव्यादौ प्रपञ्चे या नित्यख्यातिः (आत्मबुद्धिः) भवति - सा अविद्या इत्युच्यते । यथा पृथिवी नित्या तारकान्वितस्तारापतिः सस्वर्गः नित्यः । दिवौकसः देवाश्च नित्याः एवंविधं यज्ज्ञानं वर्तते सा प्रथमप्रकारकाऽविद्या इत्युच्यते । भावोऽयं वर्तते यत् केचिज्जनाः पञ्चभूतानि नित्यानि इति

1. कुण्डनी चोदकुम्भश्च बध्यते चास्तु वाहयन् ॥
   - मनु. स्मृति, 3/68
2. पातञ्जलयोगदर्शने साधनपादो द्वितीयः । पञ्चमसूत्रम् ।
   अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखाऽऽत्मख्यातिरविद्या ।

मत्वा तैर्लयार्थं तेषां कुर्वन्ति उपासनाम् । केचिज्जनाः सूर्यचन्द्र-तारागणद्युलोकानि शाश्वतानि एतद्विज्ञाय तत्प्राप्तये धूमादेः मार्ग-स्योपासनामङ्गीकुर्वन्ति । केचित् स्वर्गीयानां देवानाममरत्वं नित्यमिति ''अपामसोममृता अभूम'' इति श्रुतिकथनानुसारममरत्वमधिगन्तुं सोमरसं धयन्ति । एषु सर्वेष्वनित्येषु नित्यख्यातिरूपा प्रथमाविद्या (प्रकारिका) अविद्या इत्युच्यते ।

द्वितीयाऽविद्या सा वर्तते, या अपवित्रे पूयशोणितसमन्विते काये पवित्रां रम्यावधारणां विदधति । निःस्पन्दनात् मलमूत्र प्रस्वेदा-दिनामत्यन्तापवित्रवस्तुनां निःसरणात् - सततवेदपाठेन पवित्रीकृत्य शरीरोऽपि स्यात्, तस्य शरीरकायविभत्सतां द्योतयितुं वैयासिकीं गाथा-रूपां निजोक्तिं प्रमाणरूपेणोपस्थापयति - मलमूत्रदुर्गन्धाद्युपेतात् - मातुरुदररूपात् स्थानादस्य जन्म ।

मातृपितृरजोवीर्यादुत्पत्तिः, तथा च मातृयुक्तान्नजलादीनां परि-पाकजन्यानां रसरुधिरमांसमेदास्थिमज्जावीर्यरूपाणां सप्तधातूना-माश्रयीभूते निधनान्तरमर्थात् प्राणवियोगकाले च स्पर्शे सति स्नानादे-र्विधानमेवंविधे काये पवित्रबुद्धिरेवं वर्तते यथा काचित् कामिनी निजे देहेऽङ्गरागादिना सौरभत्वकल्पनां विदधाति तथैवापूतेऽस्मिन् देहे, मृज्जलादिना पवित्रताकल्पनं भवति । वास्तवरूपेणेदं शरीरं पण्डितास्तत्त्ववेत्तारोऽपवित्रमेव मन्यन्ते । एवं हि स्थानबीजोपष्टम्भ-निःस्पन्दनिधनाधेयशौचत्वरूपहेतुभिरपवित्रे शरीरे या पवित्रता दृश्यते सा मिथ्याज्ञानरूपाविद्याऽस्ति भ्रान्तिज्ञानरूपा वा ।

अस्याशुचौ शुचिराख्यातिकविकृतया उपमया व्यञ्जयति ग्रन्थ-कारः । नन्वेति - इयं कन्याऽतीव कमनीया गौरतमाऽभिनवा-चन्द्रलेखेवास्ति । मन्ये ब्रह्मणामधुनस्तथाऽमृतावयवैरस्याः निर्माण-मकारि - इति । तूर्णमेव चन्द्रमण्डलं भित्वा निःसृता स्यात् । नीलकमलकमलदलसङ्काशदलविशालनयना, हावभावगर्भितनयन-कटाक्षैः निखिलं जीवलोकं सान्त्वयन्ती आश्वासयन्ती वा कुथयन्ती

च दुःखाद् भवद्भिर्न भेत्तव्यं सकलान् जनान् सुखसमन्वितान् करिष्यामीति । इत्यत्र कस्य पूतिगन्धिः समन्वितस्य देहस्य मधुनामृतचन्द्रलेखाभिरुपमया साम्यसम्बन्धः प्रदर्शितः[1] । अर्थान्न कस्यापि केवलं कल्पनामात्रम् । तदपि एवंविधयाऽपूतया बहुविधमलदूषितया कन्यया विपर्य(मिथ्या)ज्ञानं प्रदर्शितम् । अतः इदं ज्ञानमपरं(द्वितीयं)मविद्यारूपमिति ।

उपर्युक्तया अन्यास्मिन् स्थलेऽपि अतिदेशं करोति - एतेनाशुचिस्त्रीशरीरे शुचिप्रदर्शनेनापुण्यरूपे पशुहिंसादौ या मीमांसकानां पुण्यबुद्धिर्वर्तते पुण्यप्रत्ययो वा भवति । तथैव अनर्थेऽर्जनरक्षणाद्यतिदुःखजनकत्वादर्थरूपधनादौ - अर्थप्रत्यय अर्थबुद्धिवर्तते सापि मिथ्याज्ञानरूपाऽविएव । यतो हि ताः सर्वाः अनिन्दितरूपत्वाद् अशुचिरूपा द्यैव । अत्रान्तरे तृतीयाविद्यास्वरूपं निरूपयति भाष्यकारः । विषयभोगरूपे दुःखे या सुखबुद्धिर्भवति सापि एकाऽविद्या एव । यस्य स्वरूपं परिणामसंस्कारमित्यादिनिरूपितम्, सम्प्रति तुर्यामविद्यां निरूपयति - अनात्मनि आत्मभिन्नेषु स्त्रीपुत्रभृत्यादिषु चेतनेषु एव शय्याग्रहासनधनादिष्वेतेषु - आत्मबुद्धिर्जायते । आत्मप्रसिद्ध - उत भोगाधिष्ठाने शरीरे या आत्मबुद्धिः सञ्जायते अथवा पुरुषस्य साक्षात्कष्टरूपभोगसाधने आत्मभिन्ने मनसि या आत्मख्यातिः - आत्मबुद्धिर्भवति - सा चतुर्थाविद्यारूपा वर्तते । यथाऽविद्यास्वरूपं मया प्रतिपादितम्[2] । तथैव पञ्चशिखाचार्येणापि भणितम् - चेतेनेषु पुत्रादिष्वचेतनेषु धनादिषु या आत्मबुद्धिर्भवति । तथा चानन्दयति । तदनन्तरं नाशे सति शोचति सः सर्वः अप्रतिबुद्धिरेव अर्थादज्ञानी एव । अर्थाद् विपर्यार्थज्ञानरूपा अविद्या युक्त एव[3] ।

---

1. स्थानाद्बीजादुपाष्टम्भान्निःस्पन्दान्निधनादपि ।
   कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ॥
2. तथैतदत्रोक्तम्, पृ. - 178. ।
3. शौचात् स्वाङ्गजुगुप्सापरैरसंसर्गः, पृ. 249. ।

पूर्णतया शौचानुष्ठानेन स्वशरीराङ्गेषु ग्लानिरुत्पद्यते । तथा चान्य-पुरुषेण सह संसर्गस्याभावो भवति । अर्थात् – मलिनेनामलिनेन पुरुषेण सह संसर्गस्य स्पर्शस्य च मनसीहा न जायते । एतदेव भाष्यकारो विशदयति – स्वाङ्गे निजशरीराङ्गेषु सञ्जातायां ग्लान्यां शौचारम्भेऽपि कृतशौचेऽपि वा निजदेहे दोषमवलोकयन् – अर्थाद् शुद्धिमपश्यन् भवति । अर्थात् शरीरविषयकाध्यासरहितः संन्यास-पदमधिगच्छति । एतदेव न भवति । अपि तु मृज्जलादिभिः स्वशरीरं प्रक्षालयन्नाप देहमशुद्धिमपश्यन् तन्मनसि देहत्यागस्येहा सञ्जायते समुद्भूतायामेवंविधायामवस्थायामन्यैः सह स्पर्शं करिष्यति जातु-चिदपि न । एवं बाह्यशौचसिद्धिं निरूप्य आभ्यन्तरिकं शौचमिदानीं निरूपयति ग्रन्थकारः[1] । आभ्यन्तरिके शौचे सति पञ्चविधानि फलानि भवन्ति । सत्त्वशुद्धिः, सौमनस्यम्, एकाग्र्यम् म्, इन्द्रियजयः आत्मदर्शनयोग्यता च भवति । केन किं भवति इत्यादि वर्णयति – सत्त्वशुद्धिः चित्तसत्त्वे शुद्धिः – अर्थान्निर्मलतामधिगच्छति । तदनन्तरं सौमनस्य समुत्पद्यते अर्थात् स्फटिकसङ्काशनिर्मलता स्वच्छता सञ्जायते । सौमनस्येन चैकाग्रता भवति । एकाग्रतया इन्द्रियजयो भवति । अर्थात् पुरुषः स्वीयानि इन्द्रियाणि जेतुं प्रभवति । येनेन्द्रियाणि स्वायतीकृतानि स सर्वं जेतुं प्रभुरिति – इन्द्रियाणि हयानि भवन्ति[2] । येनाश्वा एव स्वायत्तीकृताः स यत्र तेषां विनियोगं चिकीर्षति तत्रैव करिष्यतीति । यतो हि इन्द्रियैरेव सर्वमनिष्टमिष्टं च भवति । यो ज्ञानवान् शुद्धान्तःकरणस्तयागरतः कथमनिष्टेति योक्ष्यति ।

गीतायामपि – आनन्दकन्दपरमानन्देन भगवता श्रीकृष्णेन प्रति-पादितमिन्द्रियजयेनात्मदर्शनयोग्यता समुत्पद्यते । अर्थादात्मसाक्षात्कारं कर्तुं स प्रभुर्भवतीति । अत आत्मसाक्षात्कारेच्छुना पुरुषेण सर्वदा आभ्यन्तरतो बाह्यतश्च शुद्धिः सम्पादनीया इति सिद्धम् ।

---

1. सत्त्वशुद्धिसौमनस्येत्यादि ।
2. इन्द्रियाणि हयानाहुरित्यादि ।

आत्मसाक्षात्कारवान् - परमात्मा साक्षात्कारार्हः। यतो हि निखिलकर्मकाण्डेषु प्रथममात्मपूजनम्, तदनन्तरं परमात्मपूजनं च भवति। एवं हि आत्मसाक्षात्कारादनन्तरं परमात्मसाक्षात्कारोऽवश्यः।

## कर्मणां भेदाः स्वरूपञ्च

कर्माणि दत्तभुक्तसञ्चिञ्जन्मजन्मान्तरार्जितानि, ऐहिकामुष्मिकज्ञाताज्ञातानि प्राक्कृतानि ब्रह्महननमद्यपानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानि, गोहननस्तेयीकरणनरेन्द्राज्ञाभङ्गश्रोत्रियविप्रादिमानभङ्गबुद्धिपूर्वकबहुकालाधीताभ्यस्तशास्त्रविस्मरणादीनि उपपातकादीनि च ब्राह्मणस्त्रीबालपशुजातिवधविधवास्त्रीशूद्रादासीवैश्यागमनपरमर्मभेदनपरवृत्तिछेदनपापानि, अगम्यागमनपशुयोनिवीजजपातकूटसाक्षित्वपैशुन्यवादमिथ्यावादम्लेच्छसम्भाषणब्रह्मद्वेषकरणस्वामिभेदनमित्रवञ्चनगर्भपातरजस्वलागमनसकामब्राह्मण्यादिस्तनस्पर्शनाभेद्यभेदनाभक्ष्याभक्षाणापेयपानालेह्यलेहनाचोष्यचोषणानिरीक्ष्यनिरीक्षणावाच्यवाचनास्पृश्यस्पर्शनदेवब्राह्मणादिनिन्दात्मकस्तुतिक्रूरकर्म हिंसालुब्धकचौरपाखण्डिभाषणसङ्कलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणरसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रंयाजादिविक्रयपशुविक्रयनिरर्थकार्द्रवृक्षछेदनब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणब्राह्मणनिन्दागुरुनिन्दावेदनिन्दाशास्त्रादिनिन्दाचिताकाष्ठधूम्रचाण्डालादिस्पर्शनक्षुद्रकर्मरजस्वालादिमुखास्वादनकुग्रामवासासुरीकर्मनिष्ठुरभाषण पथि ताम्बूलभक्षणदुराग्रहदुर्भाण्डदुष्प्रतिग्राहासाक्षिभोजनपङ्क्तिभेदनैकाकीमिष्टान्नभक्षणपरशय्याशयनगृहकार्याण्यदोषाश्राव्याश्रवणाहिंसाहिंसनाबन्धबन्धनायाज्ययाजनापूज्यपूजाव्यतिक्रममातृपितृतिरस्कारस्त्रीपुरुषप्रीतिभेदनगणान्नभोजनपश्वादिहिंसास्नानसन्ध्यादेवपूजात्यागौपासनाग्नित्यागबलिवैश्वदेवत्यागत्मार्थपाककरणस्त्रीबालकसहभोजनक्रमकादिपात्रभोजनादिगुरुलघुस्थूलकल्मषकदम्बानि दत्तभुक्तसञ्चितजन्मान्तरार्जितानि आधिभौतिकाध्यात्मिकाधिदैविकानि तापत्रयसम्बन्धीनि दुःखत्रयाणि

येन भेदनं नाशः शोधनञ्च भवति, स कर्मकाण्डः[1] ।

2. ब्रह्ममुहूर्तादारभ्य यत् कर्म क्रियते सन्ध्यावन्दनादिपूजोपासनादि च निशायां शयनं यावद् यच्छुभकर्म क्रियते स 'कर्मकाण्डः' ।

3. 'काण्ड'शब्दः 'पर्ववाचकः' पर्वः, ग्रन्थि, समूहश्च वा वेद-विहितो मार्गः कर्मकाण्डः । काण्डात् काण्डात् प्ररोहन्तीति वेदे प्रतिपादितम् । कर्मकाण्डेन मनुजस्य शाखा प्रशाखा च प्रचलति वर्द्धतेति यावद् दूर्वावत् जटावंशो दृढी सुस्थिरी च भवति ।

4. काण्डशब्दो विभागवाचको यथा वेदे प्रतिपादितम् — कर्मकाण्डः, उपासनाकाण्डः ज्ञानकाण्डश्च वर्तते ।
यथा वाल्मीकिरामायणे — 1. बालकाण्डः, 2. अयोध्याकाण्डः, 3. किष्किन्धाकाण्डः, 4. अरण्यकाण्डः, 5. सुन्दरकाण्डः, 6. लङ्का- काण्डः (युद्धकाण्डः) 7. उत्तरकाण्डश्च ।

एवं प्रतीयते कात्यायनेन दृष्टकृत्यानि पञ्चभागेषु विभाजितानि यथा महापापम् । (प्राणहारिपापम्) अतिपापं (यस्मादधिकं पापं न स्यात्) पातकम् - (एवंविधानि कल्मषाणि यानि महापातक-सङ्काशानि) प्रासङ्गिकपापम् (सङ्गात् संसर्गजाद् वा समुद्भूतानि) एवमुपपातकम् - (साधारणं पापम्) ।

भविष्यपुराणेऽपि कथितम् - यत् पापं दुष्कृत्यमिति वा महा-पातकतुल्यघोषितानि मन्वादिभिरप्युक्तम् - तत्पातकम् ) वृद्ध[2]-हारितेनापि भणितं पञ्चविधानि पातकानि सन्ति, यथा - महापातकं, पातकं, अनुपातकं, उपपातकमेवं 'प्रकीर्णपातकम्' । यानि पातकानि महापातकानि भणितानि तानि पातकानि सन्ति । अनुपातकानि पातकेभ्यो न्यूनतमानि । प्रकीर्णानि निखिलकल्मषकदम्बेभ्यः पापमयानि कृत्यानि न्यूनतमानि सन्ति । विष्णुधर्मसूत्रे नवविधाः

---

1. हेमाद्रिसङ्कल्पः ।
2. कडि भेदने . गणे ।

त्रुटयो दोषाः पापानि वाङ्गीकृतानि, यथा ... अतिपातकं, महा-पातकं, अनुपातकं, उपपातकं, जातिभ्रंशकरं सङ्करीकरणम्[1] ।

जातिभ्रंशकरं तद्भवति येन मानवः स्वजात्या च्युतो भवति[2] । सङ्करीकरणं च तदस्ति येन पापेन वर्णसङ्करता समुत्पद्यते[3] । अपात्रीकरणं तद् वर्तते -- कस्यचित् पुरुषकृते इत्थं कथनीयं यदयं शुभकर्मानर्ह इति । मलावहं - एवं प्रकीर्णमतिपातकं संज्ञकं विष्णुनास्वीकृतम् । श्रीमता मनुना अतिपातकस्य एवमनुपातकस्य चोल्लेखो नाकारि[4] ।

यानि एषु महत्सु पापेषु तान्येव पापानि स्वीकृतानि चत्वारि प्रसिद्धानि महापातकान्यासन्[5] । दिवाकरलिखितायां प्रायश्चित्त-मुक्तावल्यामुद्धृतम्[6] । कात्यायनानुसारं विष्णुना वर्णितमतिपातकम् । यथा अतिपातं - मात्रा स्वस्त्रापुत्र्या पुत्रवध्वा च सह सम्भोगः[7] । मनुस्मृतौ एकादशाध्याये - मनुना विष्णुना च कथितानि सकलानि पातकानि स्वीकृतानि । किन्तु एकमतिपातकं परित्यक्ताम् । छान्दोग्योपनिषत्समये साधारणतः बाणविधानि महापातकानि परि-गणितानि[8] । यथा ब्रह्महत्या, सुरापानं हिरण्यस्तेयं, गुरुपत्नीसम्भोगः । वसिष्ठयाज्ञवल्क्यविष्णुहारीतमनुभिश्च केषाञ्चित् पातकानां महापातकसंज्ञा कृता[9] । यानि विष्णुनाऽनुपातकान्याविहितानि ।

---

1. भविष्यपुराणे ।
2. वृद्धहारीतः, 9/215,216,218 ।
3. विष्णु ध. सू. 33/3/5 ।
4. विष्णु ध.सू. ।
5. वसिष्ठस्मृतौ, 1/9/20 ।
6. मनुस्मृतौ, 11/55 एवं 180 ।
7. याज्ञवल्क्य , 5/3/227. एवं 261 ।
8. विष्णु. 35-15 ।
9. एवं वृद्धहारीतः,9/174. विष्णुस्मृतौ, अ. - 36 ।

तानि मनुयाज्ञवल्क्यविष्णुना विस्तृतरूपेण वर्णितानि । एषु त्रयेषु स्मृतिकारेषु कुत्रचित् कासुचित् वार्तासु मतभेदो दरीदृश्यते । यथोदाहरणार्थं मनुना प्रतिपादितम् ब्रह्ममोहता (वेदविस्मरणम्) वेदनिन्दा, कौटसाक्ष्यं सुहृद्वधः (मित्रहत्या) गर्हितमेवाभक्ष्याभक्षणमेवंविधानि कर्माणि सुरापानसङ्काशानीति[1] ।

[2]याज्ञवल्क्येनेत्थमुररीकृतम् । आसु वेदनिन्दा मित्रहत्या ब्रह्मोज्झतासु गुरुषु चासत्यरोपणं विधाय गुरुनिन्दनं ब्रह्महत्या समं पांपमिति ।

"ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः" ।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥

अन्यान्यपि बहून्युपपातकानि वर्तन्ते, यथा गोवधः अयाज्ययाजनं परस्त्रीगमनम् – आत्मविक्रयः गुरुमातृपितृणां त्यागः । अथान्येषामशुश्रूषणं ब्रह्मयज्ञस्य वेदाध्ययनस्य स्मार्तकर्मणः अग्निकर्मणः पुत्रस्य च त्यागः ।

कन्यादानं याजनं कन्यादूषणं वाभुर्ष्यं कुसीदग्रहणमिति वा मैथुनादिना कर्मणा व्रतलोपश्च, व्रात्यभावज्येष्ठकनिष्ठपितृव्यस्य च त्यागः अर्थात्तेषामननुकूलाचरणं भृत्याध्यापनं भृत्याचाध्ययनं तडागभूस्यारामस्य दाराणामपत्यस्य च विक्रयः । अथ च पुनः एतद्विशदीक्रियते स्पष्टीक्रियते । कानि महापातकमतिपातकपातकानुपातकमुपपातकानीमानि पातित्यहेतूनि तथा जातिभ्रंशकराणि सङ्करीकराणि मलिनीकराणि अपात्रीकराणि प्रकीर्णानि अवकीर्णानि क्वचित् ।

---

1. मनुस्मृतौ, 11-56 ।
2. याज्ञवल्क्य, 3/228 ।

अथैषामुद्देशक्रमभेदा लिख्यन्ते । यथा —

ब्रह्महत्या, सुरापानं, स्तेयम् गुर्वङ्गनागमः, एतत्सर्गश्चेति पञ्च महापातकानि । मातृगमनं दुहितृगमनं, स्नुषागमनं भगिनीगमनञ्चेति चातिपातकानि[1] ।

यागस्य क्षत्रियवधो वैश्यवधः रजस्वलावधः अन्तर्वल्यावधः सगोत्रवधः, ब्राह्मणस्य विज्ञातगर्भस्य वधः, सगोत्रावधः शरणागतस्य घातनं गुर्वाधिक्षेपः स तु बहुविधः गुरुप्रतिकूलता गुरूपरोधः गुरुणा सह वाग्विरोधः गुरुप्रत्यर्थिता गुरुजीविकाविघातो वा, गुरुस्पर्द्धा लुतागुरोरनृताभिशंसनम् । वेदनिन्दा, सुहृद्वधः अधीतवेदविस्मरणं विश्वस्तविषदानं ब्राह्मणश्वासरोधश्चेति ब्रह्महत्यासमानि निषिद्ध-भक्षणं (लशुनादि) कौटिल्यराजविषये स्वोत्कर्षार्थं राजकुलादावनृत-भाषणं रजस्वलामुखास्वादः कौटसाख्यमिति सुरापानसमानि अश्वहरणं रत्नहरणं मनुष्यहरणं स्त्रीहरणभूहरणं धेनुबपणं सर्व-निंक्षेपहरणं ब्राह्मसम्बन्धि इति सुवर्णस्तेयसमानि मित्रभार्य्या उत्तम-वर्णा कुमारी भगिनी चाण्डाली हीनजातिः समानगोत्रास्नुषामातृष्वसा पितृष्वसा मातुलानि मातृसपत्नीमातृआचार्या आचार्यपत्नीऋत्वि-गुपाध्यायश्रोत्रियपत्नीनिक्षिप्तास्वसुतासु - आसुगमनम् तथा श्वश्रूः पितृव्यपत्नां शिष्यपत्नी भगिनीसखीशरणागता राज्ञी प्रव्रजिता धात्री साध्वी वर्गोत्तमा आसुगमनं गुरुतल्पसमानि इति इमान्युनुपातकानि[2] । गोवधः व्रात्यतास्तेयं ऋणानपाकरणम् - अनाह्विग्निता अपण्य-विक्रयः परिवेदनं भृताध्ययनादानं भृतकाध्ययनं पारदार्यं पारिवित्यं वार्दुष्यं कुसीदं लवणक्रियास्त्रीवधश्शूद्रवधः वैश्यवधः क्षत्रवधो निन्दितार्थोपजीवनानास्तिक्यं व्रतलोपः सुतविक्रयो धान्यस्तेयं पशुस्तेयं अयाज्ययाजनं पितृत्यागः भ्रातृत्यागः सुतत्यागः तडागविक्रयः आरामविक्रयः कन्यासन्दूषणं परनिन्दकयाजनं परनिन्दककन्याप्रदाने

---

1. मनुस्मृतौ - एकादशाध्याये - एकाशीत्यधिकपञ्चशतपृष्ठेषु द्रष्टव्यम् ।
2. श्रीरणवीरकारितप्रायश्चित्तभागे [illegible] 35 पृष्ठं यावत् ।

कौटिल्यं व्रतलोपः आत्मार्थे क्रियारम्भो अधमस्त्रीनिषेवणं स्वाध्याय-त्यागोऽग्नित्यागं बान्धवत्यागः इन्धनार्थं द्रुमछेदः, स्त्रिया जीवनं हिंसया जीवनं औषध्या जीवनं हिंस्रयन्त्रविधानं व्यसनानि, आत्मविक्रय-शूद्रप्रैष्यहीनसाख्यं हीनयोपनिषेवणनाश्रमे निवासः परान्नपरिपुष्टता - असच्छास्त्राधिगमः नमाकरेष्वधिकारिता भार्याविक्रयोऽसत्प्रतिग्रहः भार्यात्यागो मिथ्याभिशस्तता - इमानि उपपातकानि[1] ।

एकत्र सुतत्यागो गृहान्निष्कासनमन्यत्र सुतत्यागः संस्काराद्य-करणम् । एकत्र व्रतलोपो ब्रह्मचारिणः स्त्रीसम्भोगेऽन्यत्र व्रतलोपो व्रताकरणम् । एकादस्याद्यनुष्ठानं ब्राह्मणपीडाकरणं दुर्गन्धेर्लशु-नादेर्मद्यस्य चाघ्राणम् । कुटिलत्वं पुंसि मैथुनमुखादौ मैथुनपशु-मैथुनानीमानि जातिभ्रंशकराणि । गर्दभतुरगोष्ट्रमृगहस्तिछागमेष-मत्स्यसर्पमहिषाणां प्रत्येकं वधः इमानि सङ्करीकरणानि ।

निन्दितेभ्यः प्रतिग्रहनाणिज्यशूद्रसेवनानीमान्यपात्रीकरणानि । क्षुद्र-जन्तुहत्या स्थूलजन्तुहत्या पक्षिहत्या मद्यसंस्पृष्टभोजनं फलसमिधा-कुसुमानां चौर्य्याल्पद्रव्यनाशेऽप्यत्यन्तवैक्लव्यानीमानि मलनीकरणानि । राजाज्ञा प्रतिघातराजाज्ञसकर्माकरणपुनः[2] प्रदानप्रकृतिसम्भेदाः । पाखण्डिसम्बन्धेन वैदिकानां श्रेणीनां गणानाञ्च धर्मविपर्ययः । पिता-पुत्रविवादप्रायश्चित्तविपर्ययप्रतिग्रहलोपाश्रमिणां कोपाः । वर्णसङ्कर-दोषवर्णसङ्करवृत्तिवर्णसङ्करनियमाः । उष्ट्रयानखरयान तुङ्कारहुङ्का-राभ्यां गुरुजयः । विप्रपराजयविप्रवाससम्बन्धविप्रदण्डोदगूरणदण्डा-दिना विप्रस्याऽसृक्पातनानि । विप्रस्याभ्यन्तरशोणता काष्ठादिना विप्रस्य त्वग्भेदनविप्रास्थिभेदनानि । जलसन्निधिं विना मलमूत्रोत्सर्गः[3] । जले वाग्नौ मलमूत्रादित्यागः वेदोदितनित्यकर्मत्यागः स्नातकव्रतलोपः पञ्चमहायज्ञानकृत्वा भोजनम् । आहिताग्नेरग्न्युपस्थानाभावः ।

---

1. श्रीरणवीरकारितप्रायश्चित्त भागे षट्त्रिंशत् पृष्ठेषु द्रष्टव्यम् ।
2. श्रीरणवीर. प्रा. भागे सप्तत्रिंशत्पृष्ठतोऽष्टत्रिंशत् पृ. द्रष्टव्यम् ।
3. श्रीरणवीरप्रायश्चित्ते पृ. एकोनचत्वारिंशत् ।

अन्यस्मै इन्द्रचापदर्शनमन्यस्मै चपलादर्शनम् । ब्राह्मणेन नीलवस्त्र-धारणं क्षत्रियवैश्याभ्यां पर्वसु नीलवस्त्रधारणम् । द्विजस्य पलाश-वृक्षयानशय्यापादुकादौ स्थितिः क्षत्रियस्य रणात् पराङ्मुखत्वम् । फलप्रदवृक्षच्छेदनम् । ब्राह्मणद्वयोरन्तरे गमनम् । ब्राह्मणाग्न्योर्वा । दम्पत्योर्वा (मध्ये गमनम्) गोवृषयोर्वा (मध्ये गमनम्) होमकालेऽ-न्तरेण गमनम् ।

एकवारमेकस्मै वस्तु प्रदाय तदैव ज्ञात्वाऽज्ञात्वा वाऽन्यस्मै प्रदानं पुनर्दानम् । दोहेऽन्तरेण गमनम् । स्वाध्यायेऽन्तरेण गमनम् । दार-सङ्ग्रहेऽन्तरेण गमनं नखवेशरुधिरभक्षणम् । कृते मूत्रपुरीषे शोचं विना स्नानकरणम् । गर्भणीपतेः समुद्रस्नानं केशश्मश्व्रादिवर्तनं वा तथा श्राद्धभोजनं शरगागतपरित्यागः वेदविप्लवः चण्डालश्रोत्राव-काशे श्रुतिस्मृतिपाठः सर्पनकुलयोः तथाऽजमार्जारयोः मूषकोष्ट्रयोः मण्डूकयोषितोः पुषैडकयोश्च वशुनोः अश्वखरयोश्चान्तरगमनम् । क्रोधात् स्वभार्याया अगम्येति कथनम् । अस्नाने भोजनम्, पङ्क्तौ वैषम्यपरिवेषणं नदीजलावतरणमार्गभञ्जनं, कन्यादाने विघ्नः समे वैषम्यं पतितादिसम्भाषणं पतितादिभ्योऽन्नदानादिग्रहणं भार्याधन-विनाशः चौरादिर्दण्डाभावः चौरादिपङ्क्तिभोजनम् । द्विजातेर्नील्या केशरञ्जनं नीलीकाष्ठेन द्विजस्य रुधिरनिष्कासनदुःस्वप्नदर्शनं सिन्धु-सौवीरादिदेशगमनं सूर्याभिमुखं पुरीषाद्युत्सर्गः स्वकीयपुरीषदर्शन-माहत्नीयाद्यग्नौ पादप्रतापनं ब्राह्मणस्य क्षत्रियाद्यभिवादनं तथा क्षत्रियादेर्वैश्यादौ अभिवादनं शय्यापादुकाद्यारुस्याभिवादनमन्यत्र निमन्त्रितस्यान्यत्र गमनं समित्पुष्पादिहस्तस्याभिवादनमेत वाभिवाद्या-भिवादकयोः ।

उद्कुम्भादिहस्तेनाभिवादनं तथाऽशुचिनाभिवादनं जपताभिवादनं पितृदेवकार्यं कुर्वताभिवादनं शयानेऽभिवादनं ब्रह्मसूत्रं विना विण्मूत्रोत्सर्गः । भोजनं वोर्द्धवोच्छिष्टता – अधोच्छिष्टता भोजनस्यादा-वन्ते चाचमनाभावः । दशपौर्णमासानित्ययज्ञाऽऽकरणं प्रारब्धे यज्ञे

हविर्लोपः । सन्ध्यादिलोपः पितृयज्ञलोपः ऋतौ स्वपत्न्यगमनं ऋतु-स्नानान्ते पत्यौ स्त्रियोऽपि गमनाभावः गृहिणोऽनापदि भिक्षाचरणं देवानामाभिमुख्ये ष्ठीवनम् ।

मण्डपोद्यानदेवागारादिभर्जनं स्वस्थानात् प्रतिमोत्थापनं पर्वसु स्त्रीतैलमांसादिसेवनं द्विजातीनां विमर्दने भोजनं भिन्नभाण्डभोजनं मांसादिवमने भोजनं यज्ञोपवीतादिनाशे भोजनं सुप्ते सूर्योदयः सुप्ते सूर्यास्तं वान्ते दिवाशयनम् । नग्नस्त्रीदर्शनं नग्नस्वापः श्मशाना-क्रमणम् । हयादीनामारुह्य पूज्यातिक्रमोऽजगरादीनां वधः मार्गेवस्त्र-गवादिप्रतिग्रहोऽजीर्णे भोजनं गर्भाधानादिसंस्काराभावः गर्भाधाना-करणं क्षुत्करणं ष्ठीवनमनृतभाषणं पतितैः सह भाषणं वासः परिधाया-चमनाभावः । संवत्सरक्रियाहीनस्य दर्शनस्पर्शनभाषणानि । स्वीकृत्य निमन्त्रणत्यागे निमन्त्रिताऽनह्वानम् । वधफलकाऽनृतभाषणं ब्रणमध्ये कृमिपातौ दिवामैथुनं नग्नस्नानं निषिद्धकाष्ठेन दन्तधावनं ब्रह्मचारिणः शौचाचमनादिधर्मलोपः गृहीव्रतभङ्गो मिथ्याशपथः अन्यवृत्या-धनार्जनम् शूद्रस्य द्विजकर्मकरणं स्त्रीधनोपजीवनं भार्यामुखमैथुनं गोयुक्तयानस्थमैथुनमभार्याभगिन्यादिशब्देनोक्त्वा पुनर्मैथुनं वस्तिकर्म-प्रच्छर्दविरेचनानि । देवागारशिलादिना स्वगृहकरणं वानप्रस्थपत्यो-र्व्रतभङ्गः दीक्षाभेदः ।

यमनियमादिक्रमः क्रोधाहङ्कारपिशुनानि जले प्रतिबिम्बदर्शनं अशुचौ मूत्रपुरीषादौ चापलम् । वृथाचेष्टा प्रतिज्ञायाः अनृतकथनम् । मौनं विना भोजनमर्धभुक्ते भोजनपात्रजलपानम् । आत्मघातिनः संस्कारः मुखेन जलपानमसपिण्डैः सह रोदनं प्रेतालङ्करणं ब्राह्मणेन शूद्रप्रेतानुगमनम् । स्निग्धमनुष्यास्थिस्पर्शः क्षत्रियस्य वैश्यशूद्र-प्रेतानुगमनं ऋतुकन्यारक्षणम् । ब्राह्मणेन चेत्यकृतस्पर्शः — इत्यादीनि प्रकीर्णानि इमान्युद्दिष्टपापानि अनुदिष्टान्यपि अस्थिगतसहस्रवधः अनस्थिमदनो वधः ।[1]

---

1. श्रीरणवीरप्रायश्चित्ते पृ. – 44 – द्रष्टव्यम् ।

पतितेन संस्पर्शः तेन संलापः तन्निश्वासदानम् । तेन सहैक-यानावस्थानं तेन सहैकासनावस्थानं तेन स्वस्य यागः ततोऽध्ययनं तस्याध्यापनं वा । तस्मै कन्यादानं ततो ग्रहणं वा तेन सहैकपङ्क्त्यां भोजनं तदीयान्नभोजनं तद्भाण्डभोजनम् । तदीयस्वकीयपाकान्न-मिश्रणं तदीयभाण्डेन तद्भाण्डाद्वा जलपानं तदीयधूमयन्त्रेण धूमपानं तत्स्पृष्टपक्वान्नभोजनं तेन सहैकशय्यायां शयनं तत्सम्भोगः तत्परिहितवस्त्रपरिधानं तेन स्वकीयस्त्रीसम्भोगः ।[1] तदुच्छिष्टान्न-भोजनं तत्प्रतिग्रह इत्याद्यनेकविधं संसर्गजम् । संसृज्यते इति संसर्ग इति व्युत्पत्तेः ।

अथ को नाम कर्मकाण्डः ? किं नाम कर्म कतिविधञ्च कथं च कण्डति कण्डयति वा । तथा वैष्णवपुराणेषु च को नाम कण्डन-विधिः अर्थात् खण्डनविधिरिति संक्षिप्य विवेचयिष्यते । श्रुति-स्मृतिपुराणविहितो मार्गः कर्मकाण्डः । कर्मणो द्वैविध्यम् - सद् असच्च, सत्क्रर्मणा येन वृद्धिर्भवति । असत्कर्मणा येन कण्डनं भेदनं च भवति । स कर्मकाण्डः एवञ्च बृहदारण्यकोपनिषच्छाङ्करभाष्ये प्रदर्शितम्—यथा तत्रास्य कर्मकाण्डेन सम्बन्धोऽभिधीयते ।

सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारो-पायप्रकाशनपरः । सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयो-रिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षा-नुमानाभ्यामेव सिद्धत्वान् नागमान्वेषणा ।

कर्माणि विविधानि सन्ति । दत्तभुक्तसञ्चितानि जन्मजन्मान्तर-विहितानि यानि कर्माणि तेषां भेदनं शोधनं नाशश्च येन भवति, स कर्मकाण्डः, तत्कर्मकाण्डमिति वा । 'कर्मकाण्ड'शब्दो लिङ्गद्वयं

---

1. श्रीरणवीरकारितप्रायश्चित्तभागे, 45 पञ्च चत्वारिंशत् 45 पञ्चचत्वारिंशत् पृ. द्रष्टव्यम् ।

भजते । हेमाद्रौ शोधनीयानि यानि कर्माणि कीर्तितानि - ऐहिकामुष्मिकादीनि येन शुद्धानि पूतानि वा विनष्टानि भवन्ति, स कर्मकाण्डः । कर्मकाण्डेन विना अशुभकर्मणां नाशो न जायते । यथा 'नाभुक्तं क्षीयते कर्म' इत्यादि ।

एवं हि कुकर्मणामत्ययः — एनं विना न भवति । श्रुतिरपि स्वीयैर्मन्त्रैः सूचयति समर्थयति च —

"ओं इषेत्वो र्ज्जेत्वा वायवस्थ देवो वः सविता । प्रापूर्य तु श्रेष्ठतमाय कर्मणे" इत्यादि ।

सन्ध्यायां विनियुक्ता ये मन्त्रास्तेषामपि — अयमेवाभिप्रायो वर्तते । "ओं द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मेनसः" ।

एवमघमर्षणसूक्तेऽपि समुट्टङ्कितमघं मलं पापं वा मर्षयतीत्यघमर्षणम् ।"ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत"—इत्यादि । अस्मिन् मन्त्रे एवं प्रतिपादितं यदनेन मन्त्रेण दक्षिणेतरेण नासामार्गेण जलाकर्षणेन दक्षिणमार्गेण त्यागेन चाघनाशो भवति । मलं (पापं)अपि द्विविधं भवति । जन्मजन्मान्तरकृतमैहिकमपरं तृतीयं श्लेष्मारूपमलमपि नाशमेति ।

यतो हि नासिकया प्रत्यहमेकवारं द्विवारं त्रिवारं वा जलाकर्षणेन श्लेष्मा याति नाशताम् । येन नेत्रश्रोत्रादीनीन्द्रियाणि विमलानि भवन्ति । श्रवणावलोकनमननिदिध्यानान्यपि सशक्तिकानि भवन्ति विकसन्ति । सदसज्ज्ञातुं प्रभवन्ति च । श्लेष्मणा आच्छादितः पुरुषो जडो भवति वै ध्रुवम्, यथा श्रीहर्षकविकृते सरस्वत्या भनितम् —

"मध्यमरात्रावम्भः क्लिन्ने शिरसि दधि पिब पश्चात्स्वपिहि ।
कफांशावताराज्जडतालेशमाप्नुहि ।"

अन्येऽपि कर्मणां भेदाः सन्ति । पूर्वं त्रिविधं कर्म प्रारब्धं सञ्चितं क्रियमाणञ्च प्रारभ्यतेऽनेन शरीरमिति प्रारब्धम् । प्रारब्धस्य भेदद्वयं वर्तते दत्तं भुक्तञ्च । सञ्चितं जन्मजन्मान्तरार्जितं क्रियमाणं तद् भवति तदस्माभिरिह जन्मनि करिष्यमाणमस्ति । एवमेषां कर्मणां भेदत्रयं भवति । पुनः एषां कर्मणां शुभाशुभरूपेण रसभेदाः प्रजायन्ते । भूयस्तेषां शुभाशुभरूपाणां कर्मणामाधिभौतिकमाधिदैविक-माध्यात्मिकञ्च भेदत्रयं वर्तते । एवं रसविधानां कर्मणां गुणगुणितेन अष्टादशभेदाः सन्ति । पुनः अष्टादशभेदवतां कर्मणां — कायिकं, वाचिकं मानसिकं सांसर्गिकरूपेण चतुर्भिः गुणनेन द्वावधिकसप्तति-र्भेदाः भवन्ति ।

पुनः द्वावधिकसप्ततिः कर्माणि पातकोपपातकमहापातकै-स्त्रिगुणीकृतानि षोडशाधिकद्विशतानि कर्माणि भवन्ति । याज्ञवल्क्य-स्मृतिविष्णुस्मृतिमनुस्मृतिभिश्चान्यान्यपि पापानि अङ्गीकृतानि यथा अतिपातकं महापातकमनुपातकमुपपातकं जातिभ्रंशकरं सङ्करी-करणमपात्रीकरणं मलावहं प्रकीर्णमतिपातकञ्च एवमेषां कर्मणां वसुभिर्गुणनेनाष्टाविंशतिरधिकसप्तदशशतानि कर्मणि प्रजायन्ते । अन्यान्यपि पद्मपुराणोक्तानि कर्माणि सन्ति, यथा — आर्द्रशुष्कलघु-स्थूलानि सन्ति । वेदघ्नेन द्वादशाधिकैकोनसप्ततिशतानि कर्माणि भवन्ति । सम्प्रति दत्तभुक्तयोः कर्मणोः परिभाषा प्रकीर्त्यते । यथा — श्रुतिस्मृतिपुराणोक्तकालदेशपात्रेषु यथोदिदष्टफलप्राप्तये स्वस्वत्व-निवृत्तिपूर्वकं परस्वत्वोत्पादनं कर्म दत्तमित्युच्यते । भुक्तं यथा — स्वजनकुटुम्बपरिवारेष्टगुरुजनादीनां पालनपोषणभरणार्थकृते द्रव्यो-पयोगः उपभोगः, अस्यैव नामान्तरं भुक्तमित्युच्यते ।

कर्मणि तावत् — श्रौतस्मार्त्तपौराणिकानि सन्ति । यज्ञाश्च हुताहुतप्राश्रिताश्च । यस्मिन्नग्नावाहुतिर्दीयते सो हुतरूपो यज्ञः ।

अहुतो नामा यज्ञः पौराणिको वैदिकश्च स च नानाविधः-स्नानदान-पुराणपारायणवेदपारायणतीर्थयात्रादेवपूजनभगवन्नामकीर्तनस्तोत्र-पाठव्रततर्पणप्रपाजपश्राद्धरूपो यज्ञोऽहुत इत्युच्यते । अर्थाद् यस्मिन् यज्ञेऽग्नावाहुतिर्न दीयते स अहुत यज्ञः उच्यते । प्राश्रितो यज्ञः स भवति, यस्मिन् जनेभ्यः भोजनं दीयते स प्राश्रितः ।

श्रौतं अर्थात् श्रुतिषु वेदभागेषु प्रतिपादितम् । यद्यपि स्मार्तकर्माणि श्रौतमेव, किन्तु एतावान् विशेषो यत् स्मार्तकर्मसु न केवलं श्रुतिगत-मन्त्राणां तथा च श्रुतिश्रुतदेवतानामेव ग्रहणम् । परन्तु एतदित-रोक्तानां पुराणप्रोक्तानां मन्त्राणाञ्चोपयोगो भवति । अयमेव श्रौत-कर्मणः स्मार्तकर्मणश्च मिथो भेदः ।

काण्डशब्दार्थस्तु यथा — पूर्वन्तु काण्डशब्दो लिङ्गद्वयं भजते । पुलिङ्गनपुंसकलिङ्गञ्चेत्युक्तम् ।

"कनी दीप्तौ न्मन्ताडक्वादिभ्यः कित्, अनुनासिकस्येति दीर्घः"। एवं काण्डशब्दस्सिद्ध्यति ।

काण्डशब्दस्य बहवोऽर्थाः दृश्यन्ते । यथा - दण्डे, बाणे, पर्वणि, कुत्सिते वर्गे, अवसरे, जले, नाले वृक्षस्कन्धे, स्तम्बे (गुल्मभेदे) निर्जने, नाडीवृन्दे वृक्षभेदे (शरवृक्षे) श्लाघायाञ्च ।

'काण्डो' — वेदभागः यथा काण्डर्षिः काण्डस्य वेदभागस्य ऋषिस्तदधिकारेण विचारको वेदभागमीमांसके जैमिन्यादौ । तत्र कर्मकाण्डमीमांसको जैमिनिः, तेन हि — "अथातो धर्मजिज्ञासा" इत्यादिना सूत्रजातेन कर्मकाण्डशब्दस्य विचारो विहितः । तत्र चोदनालक्षणोऽर्थो धर्मः — इत्युक्तम्, चोदना च लिङ्गादि - विधिवाक्यानि । यथा "अग्निहोत्रं जुहुयात्" इत्यादि । एवं यज्ञ-यागेष्ट्या एव धर्मरूपाः ।

अथ ऋग्वेदः सर्ववेदेषु प्राथम्यं भजते । अतः ऋग्वेदीयश्रौत-सूत्राश्वलायनयज्ञभेदाः । दर्शपौर्णमासौ — अग्नाधेयाग्निहोत्र पिण्ड-पितृयज्ञारम्भणो येष्टि — आग्नायणेष्टिकाम्येष्ट्याश्चातुर्मास्य-निरूढपशुबन्धसौत्रामणी[illegible]ज्योतिष्टोमसत्र एकाहहीन-

गवामयान्यसत्रयागाश्च भवन्ति ।ऋग्वेदीयशाङ्खायनश्रौतसूत्रे पुनराधेय-शेषेष्टियागावेव भिन्नो नवीनो स्तः । अन्येऽऽश्वलायनसूत्रसङ्काशाः ।

शेषे वेदत्रये प्रायो यज्ञाः — आश्वलायनशाङ्खायनसूत्रोक्त-सन्निभाः । अतस्ते नोक्ताः — एतेषां यज्ञयागेष्टिरूपाणां श्रौतकर्मणां सम्पादनेन कल्मषकदम्बो नश्यति सुकृतञ्च वर्धते ।

स्मार्तकर्म विशेषतः संस्कार एव, यथा — व्याससम्मृतौ मनुस्मृतौ च षोडश संस्काराः प्रदर्शिताः । तथा हि — गर्भाधानपुंसवनसीमन्त-जातकर्मनामकरणनिष्क्रमणान्नप्राशनमुण्डन(चूडाकरण)कर्णवेध-वपनक्रियाकेशान्तोपनयनवेदारम्भसमावर्तनविवाहान्तेष्ट्यः गौतम-धर्मस्मृतौ चत्वारिंशत् संस्काराः प्रदर्शिताः । एतेषु केचन यज्ञपरा अपि सन्ति —

"गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणान्नप्राशनमुण्डनोप-नयनऋग्वेदारम्भयजुर्वेदारम्भसामवेदारम्भाथर्ववेदारम्भ-समावर्तन-विवाहदेवयज्ञपितृयज्ञमनुष्ययज्ञभूतयज्ञब्रह्मयज्ञमार्गकृष्णाष्टमीश्राद्ध-पौषकृष्णाष्टमीश्राद्धमाघकृष्णाष्टमीश्रावणकर्माग्रहायणीयज्ञचैत्रपौर्ण-मासयज्ञः आश्विनपौर्णमासयज्ञाग्निस्थापनाग्निहोत्रदर्शपौर्णमासयज्ञा-ग्रहायणेष्टिकचातुर्मासयज्ञपशुबन्धयज्ञसौत्रामणीयज्ञाग्निष्टोमात्यग्निष्टो-मोक्थषोडशी वाजपेयातिरात्राप्तोर्यामाख्याः संस्काराः सन्ति । स्मृतिषु प्रायेण चतुर्वर्णानां कृते आचाराः सद्व्यवहाराः प्रायश्चित्तानि चोक्तानि शुभाशुभकर्मणां कण्डनत्वेन निरूपिताः । तत्र प्रायः सर्वासु स्मृतिषु षोडश संस्काराः परिगणिताः । केवलं गौतमधर्मसूत्रे एव चत्वारिंशत् संस्काराः उपरितनाः वर्णिताः । एतेषां कर्मणां सम्पादने एनो नश्यति पुण्यञ्चैधते ।

अष्टादशपुराणेषु केवल षट्पुराणान्येव वैष्णवपुराणत्वेन परि-गणितानि — यथा वैष्णवनारदीयभागवतगरुडपाद्मवाराहपुराणानि सन्ति । यद्यपि निखिलानि पुराणाण्यभ्यर्हितानि तेषु सात्त्विकानि वैष्णवान्येवातो वैष्णवानि पुराणोक्तानि कर्माणि विविच्यन्ते ।

विष्णुपुराणस्य तृतीयांशान्तर्गतेऽष्टमदशमचतुर्दशपञ्चदशोडशाध्यायेषु विष्णोराधनपूजनजातकर्मनामकरणविवाहश्राद्धश्राद्धेऽर्हानर्हब्राह्मणग्राह्याग्राह्यवस्तुसुकृतदुष्कृतानां वर्णनं विहितम् ।

**गरुडपुराणोक्तकर्मकाण्डः**

सप्तमाष्टमनवमदशमैकादशद्वादशषोडशसप्तदशाष्टदशैकविंशतिचतुर्विंशतिरष्टाविंशतिः-एकोनत्रिंशत्त्रिंशत् - एकत्रिंशद्-द्वात्रिशत्-त्रिंशत्-चतुस्त्रिंशत्पञ्चत्रिंशत् - षट्त्रिशत्सप्तत्रिंशत् - अष्टत्रिशत् - एकोनचत्वारिंशत् - चत्वारिंशत् - द्विचत्वारिंशत्-षष्टचत्वारिंशत् - अष्टचत्वारिशत् - पञ्चाशदेकपञ्चाशद् द्विपञ्चाशद् - एकाशीतिषडशीत्येकाधिकशतेष्वध्यायेषु सूर्यपूजनाराधनविष्णुपूजनहोमविधानलक्ष्मीसूर्यादिग्रहार्चनपञ्चवक्त्रार्चनगणेशार्चनगोपालपूजनमोहनीपूजनपञ्चतत्त्वपूजनसुदर्शनार्चनहयग्रीवार्चनसन्ध्याविधिगायत्रीजपविधानदुर्गार्चनहरस्योपरि पवित्रारोपणवास्तुपूजनसर्वदेवप्रतिष्ठापननित्यक्रियादानादिकं गुरुतल्पगप्रायश्चित्ततीर्थमाहात्म्यगणस्नानसुकृतप्रेतशिलापिण्डदानाग्रहयाणानां निरूपणं कृतम् । अथ तथा च प्रेतकल्पे तृतीये चतुर्थे पञ्चदशे पञ्चविंशतिसप्तविंशतित्यष्टाविंशतिरध्यायेषु — दानमौर्ध्व दैहिकीक्रिया प्रेतकृत्यं मरणानन्तरोपकदानं कृष्णनामकीर्तनमाहात्म्यतडागनिर्माणदानषोडशश्राद्धवैतरणीनदीनां वर्णनं सुवर्णितम् ।

**अथ पाद्मपुराणान्तर्गतकर्मकाण्डः**

एकादशद्वादशचतुर्दशषोडशाष्टादशैकविंशतिद्वाविंशतित्रयोविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशति-एकोनत्रिंशदेकत्रिंशद् अध्यायादिषु पुष्करतीर्थनर्मदाश्राद्धकरणधेनुदाननर्मदाजलकणस्पर्शवितस्तादैविकामाहात्म्यपितृतर्पणसन्ध्यावन्दनशिवपूजनकुरुक्षेत्रमाहात्म्यशाकम्बतीर्थवर्णनकनखलस्नानसुकृतकालि[illegible]दानश्राद्धानां वर्णनं विहितम् ।

### अथ नारदपुराणान्तर्गतकर्मकाण्डः

प्रथमे खण्डे षष्ठसप्तदशद्वाविंशतित्रयोविंशतिचतुर्विंशत्यष्टाविंशति-रध्यायेषु प्रयागगङ्गयोर्महिमा माहात्म्यशुक्लद्वादशीव्रतोद्यापनमासोप-मासव्रतचतुर्वर्गपुरुषनारीणाञ्च सदाचारः समुट्टङ्कितः ।

### अथ भागवतपुराणान्तगर्तकर्मकाण्डः

षष्ठसप्तमाष्टमदशमैकादशस्कन्धेषु — पुंसवनगृहस्थमोक्षधर्म-पयोव्रतनामकरणपरिणयनाह्निकपूजाविधानगृहस्थधर्मयमनियमादीना-ञ्च वर्णनं विहितम् ।

### अथ वराहपुराणान्तर्गतकर्मकाण्डः

चतुर्दशचत्वारिंशदेकचत्वारिंशद्-द्विचत्वारिंशत्त्रयाधिकचत्वारिं-शच्चतुश्चत्वारिंशत् पञ्चचत्वारिंशत्पट्चत्वारिंशत् सप्तचत्वारिंशद् -अष्टचत्वारिंशद् एकोनपञ्चात्षट्पञ्चाशत्सप्तपंचाशद् अष्टपञ्चाशद् एकोनषष्टिः द्विषष्टिः त्रयाधिकषष्टिःचतुःषष्टि एकाधिकशतं द्व्यधिकशतं त्रयाधिकशतं चतुराधिकशतं पञ्चाधिकशतं षडाधिकशतं सप्ताधिक-शतेष्वध्यायेषु श्राद्धं पौषे कूर्मपूजनं माघे वाराहपूजनं परशुरामवामन-लक्ष्मणवासुदेवदामोदरकल्किपद्मनाभकान्तिव्रतसौभाग्यव्रतविघ्नहर-व्रतशान्तिव्रतारोग्यव्रतशौर्य्यव्रतसार्वभौमव्रतमक्षीरदधिनवनीतलवण-कापासधान्यधेनूनां वर्णनं विहितम् ।

इत्थं मयात्र सङ्क्षेपेण श्रौतस्मार्तवैष्णवपुराणोक्तानि कर्म-काण्डानि तेषां कण्डनानि अर्थाद् भेदनानि शोधनानि प्रदर्शितानि ।



# अथ तृतीयोऽध्यायः

**विष्णुपुराणोक्तः कर्मकाण्डः**

वैष्णवाः विष्णुभक्ताः पाञ्चरात्रिकाः एकान्तिकाश्च उच्यन्ते । एकान्तिनः अर्थाद् एकान्ततः – अनन्यया भक्त्या केवलं विष्णु-मुपासते ।

अतः अन्येभ्यः – उपासकेभ्यः इमे भिद्यन्ते । एतेषां सकलानि संस्कारोत्सवार्चनयज्ञादीनि विशेषतया विष्णुपराणि भवन्ति । इमे सर्वतोभावेन विष्णोःशरणं भक्तिं प्रपत्तिं वा कामयन्ते । अत एव श्रौत-स्मार्तानां कर्मकाण्डानां विष्णुपरकाणि व्याख्यानानि एभिः क्रियन्ते । यथा एतेषां देवालयः यज्ञरूपेण परिकल्प्यन्ते । श्रुतिषु यज्ञेन यज्ञमय-जन्तदेवास्तानिधर्माण्यान्यासन् ॥ ते हनाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।

यजुर्वेदस्य एकत्रिंशत्तमोऽध्यायस्य षोडशतमो मन्त्रः इदं दृश्यमाना दृश्यमानं सर्वमपि जगद् – यज्ञरूपमेव । अत्र यज्ञ एव साधनं यज्ञ एव साध्यं यज्ञ एव फलं यज्ञ एव प्रथमो धर्मः (पुराकाले धर्मशब्दः नपुंसकलिङ्गोऽपि आसीत् – अत्र धर्मशब्दः कर्मपरक इति निरुक्ते उक्तम् । यथा धर्माणि आसन् ।

अतः वैष्णवः यज्ञ एव विष्णुः, विष्णु एव यज्ञः इत्यामनन्ति । यज्ञो ह वै विष्णुरिति श्रुतिमपि अनुसरन्ति कमुदकुकुदाख्यप्रभृति-पार्षादानां पूजनं भवति ।

एवमेव शुभकार्येषु अङ्कुराणां विधिः – आश्विनसिते पक्षे चैत्रसिते पक्षे च ब्रह्मोत्सवविधिः श्रीरङ्गादिक्षेत्रेषु श्रीमन्नारायण-भगवतः प्रतिष्ठितदेवालयेष्वपि विधिश्च भवति । एवंविधेषु – उत्सवेषु भगवताऽर्चाविग्रहस्य – उत्सवविग्रहेण सह गरुडहनुमत्सिंह-

शार्दुलगजपुष्पकविमानविभिन्नद्वारा देशेषु सम्प्रदायाचार्याणां अलवारसूरिप्रभृतीनां महाभागवतानां च पुरोक्तोत्सवेषु विशेषार्चना विधीयते ।

यत्र वैष्णवागमानुसारमेव विशिष्टराजोपाचारोक्तानामर्चाविग्रहाणां तत्तदाचार्याणां समर्चा विधीयते । सासमधनतदीयाराधनाभ्यां पादाभ्यां उच्यते ।

तथा च - आचार्याणां जयन्तीमुपलक्ष्य - अर्चाविग्रहः भगवान् वैष्णवैः साक्षात्क्रियते । येन भगवतभागवतानां च सुखोल्लासो विधीयते । अत एव वैष्णवदेवालयेषु मध्ये विष्णोः प्रतिमा, वामभागे लक्ष्मीदेव्याः दक्षिणभागे भूदेव्याः प्रतिमाः भवन्ति ।

अत एव मन्यते यद् - विष्णुदेवावसथ्याग्निविष्णुः आहवनीयाग्निलक्ष्मीः दक्षिणाग्निश्च भूदेवी । अयं देवालयः यज्ञरूपः, अत्र सदैव यज्ञः प्रचलति । सर्वदैवेकरूपयज्ञपरिकल्पनया यज्ञरूपविष्णुलक्ष्मीभूदेव्याश्च तादृशकुण्डसमिधादिसङ्ग्रहपूर्वकाद् यज्ञाद् अस्मिन् विष्णुदेवालये यज्ञे सतत्तयं पूर्णाधिक्यं च । अनेन मौलिकभेदेन श्रौतस्मार्तकर्मकाण्डेभ्यः वैष्णवकर्मकाण्डोऽतिरिच्यते ।

सर्वेषु संस्कारेषु - उत्सवेषु पूजाविधिश्च विष्णोः प्राधान्यं भवति । यथा वैष्णवानां निषेकादारभ्य - और्ध्वदैहिकक्रियापर्यन्तं सर्वेषु कर्मकाण्डेषु विष्णोरर्चनं प्रधानं भवति ।

यथा श्रौतस्मार्तकर्मकाण्डेषु सर्वप्रथमं गणपतिपूजनं भवति । वैष्णवसर्वधर्मकृत्येषु सूत्रवतीसहितविष्वक्सेनपूजनं अथवा वैष्णवविनायकपूजनं भवति । श्रौतस्मार्तकर्मकाण्डीयदशदिग्पालादिस्थानेऽनिरुद्धप्रद्युम्नवासुदेवसङ्कर्षणाच्युतानां पूजनं भवति । एवमेवान्येष्वपि कर्मकाण्डेषु भेदो वर्तते । एवंभूतानां भेदानामुल्लेखो वैष्णवपुराणेषु पञ्चरात्रागमेषु चोपलभ्यते ।

तत्र कश्चन भेदः विष्णुपुराणानुसृत्यास्मिनाध्याये प्रदर्श्यते । तत्रापि यथापूर्वमुक्तं वैष्णवपुराणेषु प्राथम्यं तदनुरोधाद् विष्णु-पुराणान्तर्गतं वैष्णवकर्मकाण्डं किमपि वैशिष्ट्यमुपस्थाप्यते । ग्रन्थविस्तारभयात् सूचीरूपेण लिखितः, न तु विस्ताररूपेण ।

विष्णुपुराणस्य तृतीयेंऽशान्तर्गते दशमेऽध्याये जातकर्मणो नाम-करणकर्मणो विवाहकर्मणश्च सुचारुरूपेण वर्णनं विहितम् । यथा सगरेण संस्कारविषये पृष्टम् - और्वर्षिणा सम्यक् प्रतिपादितम् । पुत्रोत्पत्तेरनन्तरं जातकर्म कार्यम्[1] । सकलक्रियाकाण्डः - आभ्युद-यिकं श्राद्धं च कर्त्तव्यम्[2] ।

दशमे - एकादशेऽहनि देववाचकः शब्दः पूर्वकार्यः यथा देवदत्त इत्यादि तदनन्तरं शर्मवर्मादि च योजयेत् । कर्मकाण्डान्तर्गतः सदाचारः सङ्क्षेपतो वर्ण्यते ब्राह्मे मुहूर्ते - उत्थाय शौचादिकं ग्रामा-द्बहिः कुर्यात् । तदनन्तरं वाल्मीकात् निर्गतां मूषिकैरानीतां जलमध्या-न्निष्काशितां गृहकुड्यात् समुद्धृतां शौचावशिष्टां सीताऽऽकर्षण-समुत्पन्नां च मृत्तिकां परित्यज्य हस्तपादादि शोधनीयम्[3] । नित्य-कर्मसम्पादनाय नदीनदतडागवापीनिर्झरेषु स्नानं सम्पादनीयम् । ततस्तर्पणं देवगन्धर्वादीनां करणीयम् । अत्रान्तरे गृहमागत्य देवादि पूजनमपि सम्पादनीयम् । शिशुकन्यावृद्धादीन् सम्भोज्य स्वयं भोजन-माचरेत् । अन्यथा नरः पापभागी स्यात् । पुत्रोत्पत्तौ जनकः सचैल-स्नानमाचरेत् स्नात्वा चाभ्युदयिकं श्राद्धमवश्यं कर्तव्यमनेना-

---

1. जातस्य जातकर्मादि क्रियाकाण्डमशेषतः ।
   पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥
2. देवपूर्वनराख्यं शर्मवर्मादिसंयुतम् ।
3. एका लिङ्गे गुदे तिस्रो दशवामकरे नृप ।
   हस्तद्वये च सप्त स्यु मृदशौचोपपादिकाः ॥
+ मृतकयोर्दशाहानि कुलस्यान्नं न भुज्यते ॥

भ्युदधिकश्राद्धेन पितृगणाः प्रसीदन्ति । आभ्युदयिकं श्राद्धं निखिलेषु माङ्गलिकसस्कारेषु सर्वदा सर्वैः समीचीनप्रकारेण कार्यम् । मृतस्य कृते निवापाञ्जलिरवश्यं दात्तव्यः । मृतकुटुम्बगृहेऽन्नं दशाहं यावत् न भोक्तव्यम् । तृतीयांशे चतुर्दशाध्याये श्राद्धप्रशंसा समुदृङ्किता । श्राद्धकरणेन ब्रह्मा-इन्द्र-रुद्र-अश्विनीकुमार-सूर्याग्नि-वसुगण-मरुद्रदगण-विश्वेदेव-पितृगणमानवगणपशु-पक्षिणः प्रसीदन्ति । आशीः-राशिं च प्रयच्छन्ति । प्रसङ्गतः काम्यश्राद्धं वर्ण्यते । उत्तरायणे गते दक्षिणायने व्यतिपाते विषुवसङ्क्रान्तौ सूर्यचन्द्रग्रहण-समये दुःस्वप्नदर्शने ग्रहपीडायां नूतनान्नगृहागते काम्यं श्राद्धं विधात्तव्यम् । स्वात्यनुराधाविशाखानक्षत्रयुक्तायाममायां श्राद्धेनाष्टौ वर्षाणि यावत् पितृगणाः प्रसन्नाः भवन्ति । पुष्यार्द्रापुनर्वसुनक्षत्रा-न्वितायामायां श्राद्धेन पितरः द्वादशवर्षाणि यावत् प्रसन्नाः भवन्ति । वैशाखमासस्य तृतीया कार्तिकमासस्य नवमी, नभस्यमासस्य त्रयोदशी माघमासस्यामा — [1]आसां चतसृणां तिथीनां पुराणेषु युगाद्या संज्ञा कृता । आसु कृतं कर्मान्तं पुण्यदं भवति ।

[2]सूर्यचन्द्रग्रहणकाले तिसृषु अष्टकासु चाहो उत्तरायणारम्भे विहितं तिलोदकं दानं सहस्रवर्षं यावत् पितृणां कृते तुष्टिकारकं श्राद्धफलदं च कथितं पुराणे । जातुचिन्माघे मासे शतभिषान्विता आमाऽऽगच्छेत् । तस्यां पितृकृत्यं अनन्तफलदं स्मृतम् । चेन्माघी अमा[3] धनिष्ठानक्षत्रान्विता भवेत् तस्यां प्रदत्तमन्नोदकं दशसहस्र-वर्षाणि यावत् पितृणां पुष्टिः तुष्टिश्च कारकम् ।

---

1. नभस्यमासस्य च कृष्णे पक्षे त्रयोदशी पञ्चदशी च माघे ।
   एता युगाद्याः कथिताः पुराणेष्वतिथयश्चतस्रः ॥ (विष्णु— 14/1/3)
2. उपप्लवे चन्द्रमसोरवेश्च ॥ — (विष्णु पु. श्लो. = 14-13)
3. काले धनिष्ठा यदि नाम तस्मिन् भवेत्तु भूपाल तदा पितृभ्यः ।
   दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत् कुलजैः मनुष्यैः ॥
   — विष्णु पु., श्लो. = 14, 16, तृतीयांशे ।

यदि पूर्वाभाद्रपादान्विताऽमा माघे समागच्छेत्तस्यां विधिना विहित-श्राद्धं सहस्त्रयुगपर्यन्तं पितृणां तुष्टिकारकं मोदमानास्तस्य च पितरः - सुखेन स्वपन्ति च । गङ्गायमुनाशतद्रुविपाशासरस्वतीषु नैमिषारण्ये च सुस्नातेन पूतेन जनेन कृतं पितृणां तर्पणं श्राद्धं च निखिल-कल्मषनाशकम् । कदा वर्षाकाले (भाद्रपदे) मघानक्षत्रान्विता त्रयोदशी भवेत् । उत माघेऽमा स्यात्, तस्यां पुत्रप्रदत्तां जलाञ्जलिं लप्स्यामहे वयम् । इत्थमहोरात्रं चिन्तयन्ति पितरस्तस्य[1] । पुत्रेणावश्यमेव श्रद्धया निजपितृणां कृते अन्नं वस्त्रं रत्नं यानं च दात्तव्यं यदि — इयतीसामर्थ्यं न स्यात्तर्हि आमन्नमेव दातव्यम् । अन्नदानेऽपि सामर्थ्यं न स्यात् तदा मुष्टिमात्रं तिलदानं देयम् । तिलदानेऽपि सामर्थ्यं न स्यात् दक्षिणाशाविलोकयता जनेन प्रणामा-दिकं कार्यम् । विधिना पितृगणानर्चति यः गङ्गाशतद्रुयमुनाविपाशा सरस्वतीषु तथा च नैमिषारण्यस्थ यां गोमत्यां स्नानफलं विन्दति । पितरो मनसि चिन्तयन्ति अभिलषन्ति चास्मत्कुले - एवंविधः कश्चित् पुरुषः स्यात्, यो वित्तशाठ्यं (कृष्णधनम्) विहाय स्वकरे कमलार्जितं धनं व्यंयीकृत्य पिण्डदानं प्रकुर्यात् । उत निजयथा-शक्त्यनुसारं स्वपितृणां कृतरत्नवस्त्रयानानि निखिलां भोजन सामग्रीं प्रदास्यति । वित्ताभावे सप्तभिरष्टभिस्तिले तर्पयिष्यति । सर्वेषां[2] पदार्थानां वस्तुनामभावे दक्षिणाभिमुखीभूय यः पितृन् प्रणस्यति । अथवा वनं गत्वा - नभोऽवलोकयन् कक्षमूलं प्रदर्शयन् सूर्यादिलोकपालान् - पितृंश्च प्रणमति सोऽपि श्राद्धफलं लभते ।

---

1. गायन्ति चैतत् पितरः कदानुवर्षामघा तृप्तिमवाप्य भूयः इत्यादि ॥
— विष्णु पु., तृतीयांशे, 14–19.

2. सर्वाभावे वनं गत्वा वक्षमूलप्रदर्शकः ।
सूर्यादिलोकपालानिदमूच्चैर्वदिष्यति ॥ — तदेव, 14 – 29.

तृतीयांशे पञ्चदशेऽध्याये श्राद्धान्नभोजनार्हान् । द्विजान् और्वर्षिः वर्णयति – त्रिणाचिकेतः[1] त्रिमधुः त्रिसुपर्णः[2] षडङ्गवेदाङ्गवेत्ता, वेदवेत्ता श्रोत्रियः ज्येष्ठसामगः ऋत्विक् स्वसेयः दौहित्रः तपस्वी पञ्चाग्निसेवकः शिष्यः मातृपितृप्रियश्च इमान् भोजयिता जनः निजान् पितृन् सम्यक् प्रीणाति ।

श्राद्धान्नभोजने वर्जिताः, अर्थादेते न निमन्त्रणीयाः । श्राद्धेऽपि दर्शनमपि एषां निषिद्धम् – मित्रघाती, मित्रद्रोही, स्वाभावतो विकृत-नखः, नपुंसकः, कृष्णदशनान्वितः कन्यादूषयिता, गार्हपत्याग्नि-विहीनः वेदोज्झितः सोमरसविक्रयने रतः लोकनिन्दकः तस्करः पिशुनः ग्रामपुरोहितः भृतकाध्यापयिता अर्थात् वेदं वेतनं गृहीत्वा यः पाठयति । आहो वेतनपाठकः वेतनं सङ्गृह्य यो वेदमधीते । परपूर्वापतिः अर्थात् पुनर्विवाहितायाः पतिः मातुः पितुश्च येन त्यागः कृतः शूद्रसन्ततिः पालकः शूद्रायाः पतिः देवलकश्च एवंविधाः द्विजाः श्राद्धान्नभोजनेऽनर्हाः । कदापि एभ्यः श्राद्धान्नं न दात्तव्यम् ।

[3]श्राद्धपूर्वदिने जनः श्रोत्रियस्य वेदविहितकर्मकाण्डकर्तुश्च निमन्त्रणं कुर्यात् । तदन्तिके गत्वा प्राञ्जलिर्भूत्वा मधुरवचसा वदेत् – पितृश्राद्धे तत्रभवन्तो मया निमन्त्रिताः – तत्रभवन्तो मया विश्वेदेवस्थाने निमन्त्रिताः । तन्निमन्त्रणमङ्गीकृत्य द्विजस्तस्मिन्-

---

1. द्वितीयकठान्तर्गतमयं वावयः पर्वते इत्यादिनां अनुवाकत्रयाणां त्रिणाचिकेतः संज्ञा कृता । तद्वेतारोऽनुष्ठानकारकश्च श्राद्धे भोजयेत् सुधी ।
2. क
3. **प्रथमेऽह्नि बुधशस्तां श्रोत्रियादीन् निमन्त्रयेत् ।**
**कथयेच्च तथैवैषां नियोगान् पितृदेविकान् ॥**
—विष्णु पु., तृतीयांशे–15 श्लोक. = 9.

ह्वि निशायां वा[1] क्रोधापास्यस्त्रीगमनपरिश्रमसाध्यानि अन्यानि निन्दितकार्याणि परिवर्जयेत् । निमन्त्रणान्नं परिभुज्य रात्रौ भोजनं न भुज्येत् । यो भुनक्ति स वायसयोनिमधिगच्छति । स्त्रीसङ्गश्च विदधाति, स स्वीयान् पितृगणान्[2] वीर्यकुण्डे पातयति । अतः ये नियमाः भोजनकर्तृणां कृते प्रोक्ताः । ते एव नियमाः श्राद्धकर्तृणां कृतेऽपि सन्ति । अतः पूर्वं कथितान् (उपर्युक्तान्) विशिष्टगुणोपेतान् सदाचार- परायणान् विद्याभ्यासरतान् ब्राह्मनान् भोजयेत् । पितृ आशीरभिलाषी । तद्दिने चेदन्योऽनिमन्त्रितस्तपस्वी जनः द्विजः समागच्छेत्तद् द्वारे तमपि भोजयेत् ।

यतो हि अतिथिर्यस्य गृहाद् भग्नाशो निवर्तते तस्मै निजं दुष्कृतं दत्वा तत्सुकृतं गृहीत्वा निर्गच्छति । अतस्तत्कृतेऽपि भोजनमवश्यं देयम् । निजगृहागतानां द्विजानां पाद्यार्घ्यादिभिः सत्कारं विधाय स्वशक्त्यनुसारं पितृणां कृतेऽभ्युगमब्राह्मणान् देवगणकृते (विश्वेदेव) युग्मब्राह्मणान् देवगणकृते (विश्वेदेव) युग्मब्राह्मणान् नियोजयेत् । अथवा एकमेकं हि नियोजयेत् ।

विश्वेषां[3] देवानां पूर्वाभिमुखमासनं पितृणामुत्तराभिमुखमासनं कुर्यात् । केषाञ्चिन्[4] महर्षिणां मतं वर्तते यत् पितृणां मातामहादीनां श्राद्धं पृथक् कार्यम् । एषां पाकक्रियाऽपि पृथगेव कार्या । यवैः

---

1. श्राद्धविवेके - अक्रोधनैः शौचपरैः भवितव्यम् भवद्भिश्च मया श्राद्ध-कर्माणि ।
2. श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियुज्य च ।
   व्यवायी रेतसो गर्ते मज्जयत्यात्मनः पितॄन् ॥
   — विष्णु., 3 यांशे, 15 अ, 11 श्लो.
3. प्राङ्मुखान् भोजयेद्विप्रान् देवानामुभयात्मकान् । पितृमातामहानां च भोजयेच्चाप्युदङ्मुखान् । — विष्णु पु., 3याशं, 15 अ., 16 –श्लो.
4. पृथक्तयोः केचिदाहुः श्राद्धस्य करणं नृप ।
   एकत्रैकेन पाकेन वदन्त्यन्ये महर्षयः ॥
   — विष्णु पु., 2 यांशे, 3 य अ., श्लो. =16.

देवानामावाहनं तिलैश्च पितृणामावाहनं कार्यम् । केचित् सहैव कार्यं श्राद्धमित्यङ्गीकुर्वन्ति । पितृणां कृत्यमपसव्येन देवानां सव्येन कर्त्तव्यम् । श्राद्धे कुशासनं विधातव्यं तद्भावे और्णासनम् । श्राद्धारम्भे द्विजानुज्ञया लवणविहीनेनान्नेन अग्नौ कव्यवाहनाय स्वाहा, सोमाय च पितृमते स्वाहा । शेषमन्नं द्विजपात्रेषु निर्वपेत् (परिवेषयेत्) तदनन्तरं रक्षोघ्नं[1] मन्त्रं पठन् भूमौ तिलानामास्तरणं कुर्यात् । तेषु पिण्डं प्रदद्यात् । तदनन्तरं तृप्तान् द्विजान् ज्ञात्वा पूर्व पितृस्थाने निमन्त्रितेभ्यो द्विजेभ्यो शिव आपः सन्तु जलमित्यनेन जलदानं, अक्षता सौमनस्यमिति पुष्पाणि इति पठन् - पितृन् विसर्जयेत् । तदनन्तरं विश्वेदेवस्थानीयान् विप्रांश्च विसर्जयेत् । यदि श्राद्धकाले योगी समागच्छेत्तमपि अवश्यं भोजयेत् । यतो हि स[2] सहस्रब्राह्मणतुल्यो भवति । श्राद्धे त्रीणि पवित्राणि मुनीश्वरैः कथितानि दोहित्रः कुतपः तिलाश्च इति । शेषान्नं बान्धवैः सह भोक्तव्यम् ।

### नारादपुराणोक्तः कर्मकाण्डः

अतीतेऽध्याये वैष्णवपुराणस्य वर्णनं कृतम् । विष्णुपुराणानन्तरं नारदपुराणस्य द्वितीयं स्थानं वैष्णवपुराणेषु वर्णितम् ।

तत्र तथ्यं नारदमधिकृत्य विष्णोः नारायणस्यैव परस्परं लोक-हिताय विलक्षणः संवादः निरूपितो गार्हस्थजीवने कर्मकाण्ड-विषयस्य महती विशिष्टभूमिका परिलक्ष्यते । यतः गार्हस्थ्याश्रमे विवाहसंस्कारात्मनः प्राणी वर्तते ।

गार्हस्थ्याश्रमे सकलकर्मणां सम्पादनविधौ केवलं पुरुषाधिकारी वर्तते । परन्तु सहधर्मिण्या पन्त्या सहैव कर्मोपासना फलवती

---

1. "अपहता असुरा रक्षा वेदिषदः ॥"
2. सहस्रापि विप्राणां चेत् पुरतः स्थितः ।
   सर्वान् भोक्तृंस्तारयति यजमानं तथा नृप ॥
   — विष्णु पु., ३य अंशम्, अ. 15, श्लो. 55.

सिद्ध्यति । अत एव तत्र नारीधर्मस्य प्राधान्येन सतीत्वसुरक्षाविधौ महत्त्वं प्रतिपादितम् । तस्मिन्नैव प्रसङ्गे प्रकरणानुरूपं गार्हस्थ्योचितं कर्म साङ्गोपाङ्गं वर्णितम् । तत्र विविधानां व्रतानां - पुरस्सरद्यापन-विधिं यावत् क्वचिन् - नारदं प्रति महर्षिणां प्रश्नः नारदोत्तरप्रदानं एव क्वचिन्नारदेन कृतेषु प्रश्नेषु नारायणस्य समाधानं विहितम् ।

एवं रीत्या कर्मणां विधिप्रश्नोत्तरप्रसङ्गेन नारदमधिकृत्य वर्णितः । तदधिकृत्य तत्त्वेनेनैव अस्य पुराणस्य नाम नारदपुराणमिति ।

क्वचिच्चैतस्य नाम बृहन्नारदीयमिति परन्तु भागवतमहापुराण-द्वादशस्कन्धस्य त्रयोदशाध्यायानुरोधेन नारदपुराणमित्यैवाभिहितम् ।

सप्तमेऽध्याये गङ्गास्नानस्य महान् महिमा वर्णितः । अस्यां मज्जनमात्रेण जन्मजन्मान्तरार्जितानि निखिलानि पापवृन्दानि शममियन्ति । स्नानसमये भागीरथ्याः स्मरणेनैव सकलतीर्थस्नानफलं लभते नरः ।

सप्तदशेऽध्याये द्वादशमासस्य द्वादशीव्रतमाहात्म्यं वर्णितम् । एषां व्रतानामारम्भः मार्गशीर्षमासतो भवति । संवत्सरान्तरे कार्तिके भवति । एषु द्वादशमासव्रतेषु स्नानव्रतदानहोमकीर्तनजागरणादीनां महत्पुण्यं वर्णितम् ।

अष्टादशेऽध्याये शुक्ल[1]मार्गशीर्षतः समारभ्य कार्तिकशुक्लान्तं यावत् पौर्णमास्याः व्रतविधानं तत्फलं च वर्णितम् । एषु पूर्णिमा-व्रतेषु दानस्य कीर्तनस्योपवासस्य श्रीलक्ष्मीनारायणस्य (सत्यनारा-यणस्य) उद्यापनस्य च महत्पुण्यं समुद्घुङ्कितम् ।

एकोनविंशत्यध्याये कार्तिकशुक्लदशम्यां ध्वजारोपणं कार्यम् । अनेन ध्वजारोपणेन गङ्गास्नानजं फलं विन्दति मानवः । अथवा तुलसीसेवा शिवलिङ्गार्चनं कार्यम् ।

---

1. सर्वेषां प्रायः व्रतानामारम्भो मार्गशीर्षत एव भवति, यतो हि गीतायां स्वयमेव भगवता श्रीकृष्णेन प्रतिपादितम् — 'मासानां मार्गशीर्षोऽस्मीति'।

एकविंशत्यध्याये पञ्चरात्रव्रतपुण्यं सुवर्णितम् । इदं व्रतं मार्ग-शुक्लदशमीतः आरभ्य पूर्णिमान्तं प्रकर्त्तव्यम् । अस्मिन् पञ्चरात्र-व्रते निराहारः कार्यः । अनेन[1] पञ्चरात्रव्रतेन गवां कोटिसहस्रदानं फलं नरोऽधिगच्छति ।

द्वाविंशत्यध्याये मासोपवासव्रतविधानमुक्तम् । इदं व्रतमाषाढ-श्रावणे भाद्रपदे उताश्विने कार्यम् । अस्मिन् पञ्चगव्यप्राशनं विष्णु-समीपशयनं पञ्चामृतेन हरिपूजनमुक्तम् । अनेन व्रतेन सर्वाश्रमस्थाः जनाः विद्वान्सः मूर्खो वा सर्वेऽपि मोक्षं लभन्ते ।

त्रयोविंशत्यध्याये एकादशीव्रतस्य महत्पुण्यं सुवर्णितम् । अस्मिन् पञ्चामृतेन पुरुषसूक्तमन्त्रैश्च परिपूजनं विधाय एकादशीव्रतसङ्कल्पः कार्यः । अनेनाभीष्टफलं पुरुषो लभते ।

चतुर्विंशत्यध्याये सदाचारस्य वर्णाश्रमधर्मस्य विष्णुपुजनस्य च निरूपणं कृतम् ।

पञ्चविंशत्यध्याये यज्ञोपवीतधरणं गायत्रीमन्त्राध्ययनं अग्निकार्यं मधुमांसस्त्रीनिषेवनं जले दन्तधावनं नक्षत्रजीविनं परान्नभोजनं च निरूपितम् ।

षड्विंशत्यध्याये निखिलस्य स्मार्तधर्मस्य गृहस्थधर्मस्य वेदा-ध्ययनादिकालस्य च सुचारुरूपेण वर्णनं विहितम् ।

अष्टाविंशत्यध्याये श्राद्धस्य कालः श्राद्धे भोजनार्हद्विजानां लक्षणानि श्राद्धे वर्ज्याः पदार्थाः श्राद्धनियमाश्च सम्यग्रूपेण सुवर्णिताः ।

एकोनत्रिंशेऽध्याये श्राद्धे यज्ञे व्रते दाने वेदाध्ययने च तिथेः सुचारुरूपेण निर्णयो विहितः ।

त्रिंशेऽध्याये गोदानस्य भूमिदानस्य हिरण्यदानस्य गृहदानस्य हयदानस्य गजदानस्य स्त्रीदानस्यान्यस्य निखिलस्य दानस्य माहात्म्यं पुण्यं च सुवर्णितम् । तथा च विधिना विष्णुपूजया सकलाः हत्याः प्रणश्यन्ति निखिलतीर्थस्नानपुण्यं च लभते नरः ।

---

1. गवां कोटिसहस्राणि दत्वा यत् फलमाप्नुयात् ।
तत् फलं पुम्भिरेतस्या उपवासतः ॥

एकत्रिंशेऽध्याये — जन्मजन्मान्तरार्जितानि दुष्कर्माणि तैरधिगताः याः यमयातनाः तासां निवृत्तये विविधदानानां धर्माणां च वर्णनं विहितम् ।

एकोनचत्वारिंशेऽध्याये हरिकृते देवालये गृहे वा नित्यं दीपदानस्य अर्थात् प्रज्वालनस्य शालिग्रामस्यानुदिनं पूजनस्य चात्यधिकं पुण्यं वर्णितम् ।

एकचत्वारिंशेऽध्याये हरिर्नाम स्मरणस्य कीर्तनस्य तत्सविधे नृत्यस्य चाधिकं पुण्यं माहात्म्यं च वर्णितम्[1] ।

षट्षष्टितमेऽध्याये निखिलमाह्निकं कृत्यं शौचाचारः स्नानविधिः सन्ध्यावन्दनादिप्रकारस्तन्नियमाश्च सुष्ठुरूपेण वर्णितः ।

सप्तषष्टितमेऽध्याये शिवस्य विष्णोश्च पूजाप्रकारः तद्भेदाः तल्लक्षणानि च सम्यक् रूपेण वर्णितानि । देवपूजने पुण्यमपूजने च महान् दोष इति संल्लिखितः[2] ।

अष्टषष्टितमेऽध्याये गणेशपूजनं (अर्चनं वा) गणेशगायत्री, गणेशमन्त्रः, गणेशोद्यापनं च सुवर्णितम् ।

एकोनसप्ततितमेऽध्याये त्रयीमूर्तेः अर्थात् सूर्यस्य चन्द्रस्य भौमस्य च पूजनं, व्रतविधानं तन्मन्त्रजपादिकं च समुदृङ्कितम् । तदर्चनेऽनर्चने सुकृतासुकृतं लाभालाभौ च सुवर्णितौ । तथा च बुधगुरुशुक्राणां च पूजनं यन्त्रविधानं तत्पूजनं तन्मन्त्रजपः संल्लिखितः ।

एकसप्ततितमेऽध्याये — नृसिंहभगवतोऽर्चनं तद् यन्त्रविधानं नृसिंहभगवतो गायत्री च वर्णिता[3] । नृसिंहस्तोत्रस्यापि सुचारुरूपेण वर्णनं विहितम् ।

---

1. हरिर्नामपरान् मर्त्यान्न कलिर्बाधते क्वचित् ।
   हरिर्नामैव नामैव नामैव मम जीवनम् ॥
2. पूजा – आतुरी सौतकी त्रासी साधनाभाविनी तथा दौर्बोधी पञ्चमी स्मृता ।
3. नृसिंहगायत्री – वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नो नृसिंहः प्रचोदयात् ।

त्रिसप्ततितमेऽध्याये श्रीलक्ष्मणमन्त्रसहितराममन्त्रस्य विधानं जपो होमश्च तथा च मारणोच्चाटनादिकं समीचीनरूपेण वर्णितम् ।

चतुःसप्ततितमेऽध्याये श्रीमतः हनुमतो मन्त्रयन्त्रविधानं श्रीप्राप्ति-साधनप्रकारः तथा च समीहितसिद्धये बहुविधानां द्रव्यानां होम-प्रकारः सुचारुरूपेण वर्णितः ।

पञ्चसप्तत्यध्याये श्रीमतः पवनसुतस्य दीपदानस्य प्रयोगो विहितः । कामनाभेदेन बहुविधानि पञ्चधान्यानि सप्तधान्यानि दीपस्याधः-स्थापनीयानि इति सुविवीच्य वर्णितानि, तथा च शुभाशुभकर्माणि मारणोच्चाटदीनि तेषां सिद्धये कृष्णपितादिदीपवर्तिका निर्माण-प्रकारोऽपि वर्णितः ।

षट्सप्ततितमेऽध्याये कार्तवीर्यतुष्टये तन्मन्त्रस्य विधानं तत् समक्षे दीपदानस्य क्षेमकरीत्यादीनां शक्तिनां पूजनमावाहनं च तथा विविध-भयनिरासाय तासां प्रीतये नानाविधानि बलिद्रव्यादीनि सुवर्णितानि[1] ।

एकोनशीत्यध्याये शिवलिङ्गस्य मध्वाज्यद्रव्यैः षोडशोपचारैश्च पूजनमुक्तम् ।

अशीत्यध्याये आनन्दकन्दपरमात्मनः श्रीकृष्णस्यार्चनमाराधनं तत्तुष्टये होमविधिरपि लिखिता ।

एकाशीत्यध्याये सुतप्राप्तये देवकीसुतः इत्यादेः मन्त्रस्य जपः हेम्याः श्रीकृष्णप्रतिमायाः पूजनं होमश्च वर्णितः ।

त्र्यशीत्यध्याये श्रीलक्ष्मीप्राप्तये पञ्चप्रकृतिमन्त्रजपः त्रिमध्वाक्तै-ररुणाब्जैः, दुर्वादिभिश्च - होमो विहितः ।

पञ्चाशीत्यध्याये षडशीत्यध्याये च - सर्वासां देवीनां यक्षिणीनां च पूजनमाराधनमर्चनजपश्च निरूपितः । तासां दुर्गादीनां सर्वशक्तीनां निखिलयक्षिणीनां च सर्वशक्तीनां प्रीतये होमोऽपि प्रतिपादितः ।

---

1. क्षेमङ्करी वश्यकरी श्रीकरी च यशस्करी ।
आयुःकरी प्रज्ञाकरी विद्याकरी पुनः ॥

सप्ताशीत्यध्यायेऽष्टाशीत्यध्याये च क्रमेण दुर्गायाः राधायाश्च पूजनं तन्मन्त्राः जपो होमश्च तथा च यन्त्रस्य प्रकारोऽष्टदलेषु च तासां नामानि पूजनानि च सुवर्णितानि ।

एकोननवत्यध्याये ललितास्तोत्रसहस्रनाम्नामपूर्वो महिमा वर्णितः । ये जन्मजन्मान्तरार्जितानां कल्मषकदम्बानां विघाताय महदुपकरोति ।

नवतितमेऽध्याये कामेश्वर्यादिशक्तीनां पूजनं विहितम् । भिन्नेषु वासरेषु भिन्नैः भिन्नैः कुसुमैः भिन्नैः भिन्नैः द्रव्यैः तासां सर्वासां शक्तीनां पूजनं होमः बलिर्दात्तव्या[1] । तथा च वैशाखादिषु मासेषु पृथक्-पृथक् पूजाद्रव्यैः कुमारीणां पूजनमाराधनं वन्दनं वस्त्रदानं च विहितम् ।

एकनवतितमेऽध्याये सपरिवारस्य श्रीमहादेवस्य जपमन्त्रः होम-प्रकारः होमद्रव्यानि च प्रतिपादितानि । अस्मिन्नेवाध्याये वैष्णव-मन्त्राणामपि महत्ता चतुर्वर्गफलप्रदत्वं च वर्णितम्[2] ।

दशोत्तरशततमेऽध्याये द्वादशमासान्तरगतानि प्रतिपत्तिथिव्रतानि वारव्रतानि च तेषां च विधिविधानानि होमोद्यापनानि सुवर्णितानि । सर्वेषु व्रतेषु ब्रह्मचर्यं धारणीयं हविष्यान्नं च भोक्तव्यमित्यपि वर्णितम् ।

एकादशाधिकशततमेऽध्याये चैत्रशुक्लद्वितीयायां ब्राह्मणपूजनं कार्यम् । बालेन्दोः पूजनमपि विहितम् । वैशाखशुक्लद्वितीयायां ब्रह्मणो विष्णोः रूपिणोऽर्चनं सप्तधान्योपरि कलशस्थापनं तदुपरि विष्णोः षोडशोपचारैः पूजनं कार्यमिति लिखितम् । ज्येष्ठशुक्ल-द्वितीयायां व्रतं कार्यम् । भुवनाधिपस्य सूर्यस्य पूजनं ब्राह्मणभोजनं च कार्यम् । आषाढशुक्लद्वितीयायां द्वितीयाव्रती सुभद्रया सहितं रामं

---

1. रविवारेऽरुणाम्भोजैः कुमुदैः सोमवारके भौमे रक्तोत्पलैः सौम्यवारे तगर-सम्भवैः गुरुवारे शुक्लहारैः शुक्रवारे सिताम्बुजैःनीलोत्पलैर्मन्दवारे इत्यादि ।

2. राममन्त्राः कृष्णमन्त्राः साङ्गारासेशिमन्त्रकाः ।
शाक्ताः सौराश्च गाणेशाः शैवा प्रोक्ताः शुभावहाः ॥

पूजयेत् । शय्यादानं च कुर्यात् । श्रावणशुक्लद्वितीयायाः व्रतं धार्यं विश्वकर्मणोः पूजनं कुर्यात् । भाद्रशुक्लद्वितीयायां इन्द्रपूजनस्य महान् महिमा वर्णितः । आश्विनशुक्लद्वितीयायां दानं व्रतं हरितुष्टये विधेयम् । कार्तिकशुक्लद्वितीयायां यमस्य पूजनं तत्तुष्टये वस्त्र-छत्रोपानहादिदानं कार्यम् । भगिन्याः गृहे भोजनं कार्यम् । भगिनी भ्रातुर्भाले तिलकं कुर्यात् । भ्राता तस्यै वस्त्रालङ्कारादिकं दद्यात् । मार्गशीर्षशुक्लद्वितीयायां व्रती श्राद्धेन पितृन् प्रीणयेत् । पौषशुक्ल-द्वितीयायाः व्रतं गोशृङ्गेण[1] शिरसि मार्जनं बालेन्दुदर्शनं च कुर्यात् । माघशुक्लद्वितीयायां व्रती स्वर्णस्य भास्करप्रतिमां निर्माय तत्पूजनं च कुर्यात् । तण्डुलपूरितं ताम्रपात्रं विधिना प्रदद्यात् ।

फाल्गुनशुक्लद्वितीयायां व्रती सुश्वेतैः पुष्पैः शिवस्य पूजनं कुर्यात् । चैत्रशुक्लतृतीयायां स्वर्णमयीं राजतीं ताम्रमयीं मृण्मयीं सर्भतृकां गौरीं विधाय तत्पूजनं जागरणं च कार्यमनेन पूजनेन जागरणेन वा नारी सौभाग्यं पुत्रं धनादिकं च विन्दति । वैशाख(राधा)शुक्लतृतीयायां श्रीसमेतं नारायणस्यार्चनं गङ्गास्नानं च महत्पुण्यदमुक्तम् । ज्येष्ठ-शुक्लतृतीयायां रम्भेति व्रतं कीर्तितम् । अस्मिन् सपत्नीकद्विजस्य पूजनमुक्तम् । अनेनापि नारी अखण्डसौभाग्यं लभते । आषाढशुक्ल-तृतीयायां शुक्लाम्बरधारिणं सलक्ष्मीकं केशवमर्चयेत् । विप्राय सर्वाभरणभूषितां सवस्त्रां सुरभीं दद्यात् ।

श्रावणशुक्लतृतीयायां स्वर्णमय्या गौर्य्याः पूजनमुक्तम् । भाद्रशुक्लतृतीयायां हरितालिकाव्रतं भवति । अस्मिन् व्रते नारी निशायां पक्वान्नैः फलैः पुष्पैः पत्रैश्च शिवपूजाचतुष्टयं कुर्यात् । अनेनाक्षयं सौभाग्यं लभते । आश्विने मासे तृतीयायां बृहद्गौरीव्रतं कार्यम् । कार्तिकशुक्लतृतीयायां विष्णुगौरीव्रतं भवति । अस्मिन् व्रते विप्रान् पञ्च सुवासनीश्च वस्त्रालङ्कारचन्दनादिभिरर्चयेत् ।

---



1. गवय ।

मार्गशुक्लतृतीयायां हरगौरीव्रतमुक्तम् । अनेन व्रतेन विविधान् भोगानधिगच्छति व्रती । पौषशुक्लतृतीयायां ब्रह्मगौरीव्रतं कार्यम् । माघशुक्लतृतीयायां फाल्गुनशुक्लतृतीयायां निखिलकामनायै व्रतं प्रकर्त्तव्यम् ।

त्रयोदशाधिकशततमेऽध्याये चैत्रशुक्लचतुर्थ्यां वासुदेवस्वरूपिणो गणपस्य पूजनं विधातव्यं तस्मै गणपाय काञ्चनदक्षिणा च देया । बैशाखमासशुक्लचतुर्थ्यां व्रतमनुष्ठेयं सङ्कर्षणपूजनं कार्यम् । गृहस्थः द्विजमुख्येभ्यश्च शङ्खदानं देयम् । ज्येष्ठकृष्णचतुर्थ्यां व्रतयुक्तेन जनेन प्रद्युम्नपूजनं विधातव्यम् । यूथेभ्यो दानादिकं देयम् । आषाढशुक्लचतुर्थ्यां अनिरुद्धस्यार्चनं यतिभ्यश्चालाबुपात्राणि देयानि । चतुर्मूर्तिव्रतानि द्वादशवर्षाणि यावत् कर्त्तव्यानि तदनन्तरमुद्यापनं प्रकर्त्तव्यम् । श्रावणशुक्लचतुर्थ्यां हेमगणेशं विधाय रक्तकुसुमैः विल्वपत्रापामार्गशमीदूर्वा हरिप्रिया(तुलसी)पत्रैरभ्यर्च्य सर्वतोभद्रमण्डलादिकं विधाय उद्यापनं कुर्यात् ।

श्रावणशुक्लचतुर्थ्यां सिद्धिवैनायकस्यापि अर्चनं कार्यम् । भाद्रपदकृष्णचतुर्थी शुक्लचतुर्थी च निषिद्धा, अस्यां चन्द्रस्य दर्शनं नैव कार्यम्[1] । आश्विनचतुर्थ्यां कपर्द्दीशं गणेशं जयेत् । कार्तिककृष्णचतुर्थ्यां करकाख्यं व्रतं कार्यमिदं व्रतनारिभिरेव कार्यम् । अस्मिन् व्रते गणेशस्य पूजनं विधाय तदग्रे भक्ष्यभोज्यचोष्यलेह्यादीनि वस्त्रालङ्कारादीनि स्थापनीयानि समर्पणीयानि वा । कार्तिककृष्णचतुर्थ्यां नागव्रतं भवति । अस्मिन् व्रते शङ्खपालादिनागानां पूजा विधातव्या । मार्गशीर्षशुक्लचतुर्थ्यां अयाचितोपवासः कार्यः, वर्षानन्तरं उद्यापनादीनि कार्याणि । चुतर्विंशतिसंख्याकाश्च मोदकाः

---

1. अस्यां चतुर्थ्यां शशिनं न पश्येच्च कदाचन ।
पश्यन् मिथ्याभिशापस्तु लभते नात्र संशयः ॥
चन्द्रदर्शनदोषनिरासाय पौराणिकमन्त्रः ।
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ॥

विघ्नेश्वराय समर्पणीयाः । पौषकृष्णचतुर्थ्यां विघ्नेशः पूजनीयः । माघकृष्णचतुर्थ्यां सङ्कष्टनाशकं व्रतं कथितम् । अस्मिन् व्रते तिलचूर्णानि तिलमोदकानि च गणेशायार्पणीयानि स्वयमपि च भोक्तव्यानीति । माघशुक्लचतुर्थ्यां गौरीव्रतं क्रियते । अस्मिन् व्रते नरैः नारीभिश्च कुन्दपुष्पैः, सकुङ्कुमैः रक्तपुष्पैश्च गणेशपूजनं विधातव्यम् । फाल्गुनमासे चतुर्थ्यां ढुण्ढिराजव्रतमाख्यातम् । अस्मिन् व्रते तिलपिष्टैः ब्राह्मणाः भोजनीयाः । सर्वासु सितास्वसितासु वा गणेशः पूजनीयः ।

चतुर्दशाधिकैकशततमेऽध्याये पञ्चमीव्रतानि कथितानि । मधुशुक्लपञ्चम्यां मत्स्यजयन्ती भवति । अस्यां मत्स्यार्चा कार्या । बैशाखमासे शेषस्य पूजनं व्रतमाराधनञ्च कार्यम् । ज्येष्ठमासे पितृणां पूजनम्, तेषां कृतेऽन्नदानादिकं कार्यम् । आषाढे पञ्चम्यां नगराद्बहिः निर्गत्य पञ्चवर्णान्वितं ध्वजं विधाय वेणुदण्डेन संयोज्य नगराद्बहिः स्थापयेत् । तस्याधः लोकपालानां तुष्टये ब्राह्मण- भोजनादीनि कर्त्तव्यानि पञ्चमी व्रतपूर्तये । वायुपरीक्षणं च कार्यम् । श्रावणकृष्णपञ्चम्यामन्नसमृद्धिदं व्रतं विद्यते । अस्मिन् व्रते सर्वाण्यान्नानि देवेभ्यः ऋषिभ्यः पितृभ्यश्च समर्पणीयानि । शुक्लपञ्चम्यां द्वारस्योभयतः गोमयेन विषल्वणाः लेख्याः गन्धादिना पूज्याः । भाद्रकृष्णपञ्चम्यां पञ्चमी व्रतपूर्तक्षीरेण नागाः तर्पणीयाः । तेन सर्पः निर्भयं भवति । भाद्रशुक्लपञ्चम्यां सप्तर्षीणामर्चनं ध्यानादिकं कार्यम् । आश्विनशुक्लपञ्चम्यामुपाङ्गललिताव्रतमस्ति । अस्य व्रतस्य सम्पूर्तये स्वर्णमयीं मूर्तिं विधाय पूजयितव्या । कार्तिकशुक्लपञ्चम्यां जयाव्रतं लिखितम् । जयां षोडशोपचारैः सम्पूज्य पुराणज्ञाः द्विजाः व्रतिना पूजनीयाः भोजयितव्याश्च । मार्गशीर्षशुक्लपञ्चम्यां नागपूजनं कार्यम् । पौषशुक्लपञ्चम्यां व्रतपूर्तये मधुसूदनपूजनं कार्यम् ।

पञ्चदशाधिकशततमेऽध्याये षष्ठीव्रतमनुष्ठेयम् । चैत्रशुक्लषष्ठ्यां कुमारव्रत षण्मुखपूजनम् । वैशाखे कार्तिकेयपूजनं ज्येष्ठशुक्लषष्ठ्यां

दिवाकरपूजनं व्रतसम्पूर्तिहेतवे क्रियते । आषाढशुक्लषष्ठ्यां स्कन्द-पूजनं कार्यम् । श्रावणे शरजन्मानमर्चयेद् व्रतसम्पूर्तिहेतवे ।

भाद्रपदमासि कृष्णषष्ठ्यां ललिताव्रतमुच्यते । अस्मिन् व्रते गिरिशप्रियायाः पूजनं कार्यम् । भाद्रशुक्लषष्ठ्यां चन्दनाख्या षष्ठी-त्युच्यते - अस्यां रविपूजनं चन्द्रपूजनं च कार्यम् । आश्विनशुक्ल-पञ्चम्यां कात्यायन्योः देव्याः पूजा कार्या व्रतिना । कार्तिकशुक्लषष्ठ्यां षण्मुखार्चनं व्रतं च कार्यम् । मार्गशीर्षशुक्लषष्ठ्यां स्कन्दस्य व्रतमुक्तमस्मिन् व्रते तारकासुरनिहन्ता स्कन्दो गन्धादिना पूजनीयः । पौषे षष्ठ्यां दिनपतिः (सूर्यः) पूज्यः । तदा व्रतपूर्तिर्भवति । माघे षष्ठ्यां वरुणानाम्नी षष्ठी समाख्याता । अस्यां वरुणस्य पूजनं विधेयम् । फाल्गुनशुक्लषष्ठ्यां पशुपतिः पूज्यः गन्धादिना ।

षोडशाधिकशततमेऽध्याये चैत्रशुक्लसप्तम्यां बहिः स्नानस्य गन्धर्वयुगलपूजनस्य महन्माहात्म्यं वर्णितम् । बैशाखसितसप्तम्यां जाह्नवीपूजनं विधयेम् । अस्मिन् एव दिने क्रोधात् मीतायाः गङ्गायाः जह्नोः ऋषेः दक्षिणकर्णात् निर्गता अतस्तज्जन्मदिनं प्रोक्तं ऋषिस्तत्त्वदर्शिणा । अस्यां कमलव्रतमपि भवति तिलमात्रं सौवर्णं कमलं नमः पद्महस्ताय नमस्ते विश्वधारिणे - इत्यनेन मन्त्रेण पूजनं विधाय सूर्याय समर्पणीयम् । निम्बपत्रैश्च सूर्यस्य पूजनं शर्करायाः दानं कार्यम् । अस्याः अपरनाम शर्कराख्या इति । निम्बपत्रस्य प्रासनं कार्यम् । ज्येष्ठशुक्लसप्तम्यामिन्द्रस्य दिवाकरस्य च पूजन-मुक्तम् । आषाढशुक्लसप्तम्यां विवस्वान्नामा भास्करः पूज्यः ।

श्रावणशुक्लसप्तम्यामव्यङ्गाख्यं व्रतं भवति । कार्पासं चतुर्हस्तं सार्द्धवस्त्रं गोपतेः प्रीतये दानं देयम् ।

भाद्रशुक्लसप्तम्यामयुक्तभरणाख्यं व्रतं विहितमस्मिन् व्रते सोमस्य महादेवस्य षोडशोपचारैः पूजनं कार्यं सप्ततन्तुकृतं सप्तगन्थियुतं दोरकं वर्षं यावत् धार्यम् । वर्षान्ते पायसेन सप्तविप्राः भोजनीयाः, तेभ्यः सप्तसप्तफलानि देयानि । आश्विनशुक्लसप्तम्यां शुभाख्यं व्रतं विधेयम् ।

अस्मिन् व्रते कपिलाधेनुदानमुक्तम् । कार्तिकशुक्लसप्तम्यां शकाख्या-सप्तमीव्रतमुक्तं, अस्य व्रतस्य पूर्तये सप्तशाकानि सप्तहाटकमयानि कमलानि च विप्राय देयानि । मार्गशीर्षशुक्लसप्तम्यां - मित्राख्यं व्रतमुदाहृतम् । अस्मिन् व्रते सप्तद्विजाः भोजनीयाः तेभ्यः स्वर्णमयी सप्तसप्तदक्षिणा देया । पौषसितसप्तम्यामभाख्यं व्रतमुक्तमस्मिन् भानु-पूजनं कर्त्तव्यम् । माघासितसप्तम्यां सर्वाप्तिसंज्ञकं व्रतं कथितम् । व्रतपूर्तये सुवर्णमयीं रविप्रतिमां सम्पूज्य द्वितीयेऽह्नि पायसान्नेन द्विजाः भोजनीयास्तेभ्यः हिरण्यमयी रविप्रतिमा प्रदेया । माघसितसप्तम्याम-चलाख्यं व्रतं स्मृतम् । अस्याः त्रिलोचनजयन्त्यपि अपरं नाम कथितम् । अस्मिन् व्रते सवितुः हेमीं प्रतिमां हेमाश्वरथसंयुक्तां च विधाय द्विजाय दातव्या । तपस्यशुक्लसप्तम्यांमर्केन सूर्यपूजनमर्क-पत्रप्राशनं च कर्त्तव्यम् । अस्यार्कव्रतमिति नाम कथितम् ।

सप्तदशाधिकशततमेऽध्याये अष्टमीव्रतानां वर्णनं विहितम् चैत्रशुक्लसप्तम्यां भवान्याः पूजनं उक्तम् । अस्मिन् व्रते जगदम्बायाः अष्टोत्तरशतप्रदक्षिणाः कार्याः, तस्याः एव पूजनमशोककलिका-प्राशनं कार्यम् । वैशाखसितसप्तम्यां वारिव्रतं कार्यमस्मिनपराजिता देवी पूज्या केवलं वारिप्राशनं नान्यत् किञ्चित् । ज्येष्ठासिताष्टम्यां त्रिलोचनं शिवं पूजयेत् । तस्यैव व्रतं कुर्यात् । ज्येष्ठासहजाष्टम्यां भगवत्याः पूजनमुक्तम्, तदेवाराधनं ध्यानं च कार्यम् । आषाढशुक्ला-ष्टम्यां निशम्वुनादेव्याः पूजनं मिष्ठान्नवितरणं ब्राह्मणभोजनं च कार्यम् । नभोमासे सिताष्टम्यां दशाफलमिति व्रतं भवति अस्मिन् कृष्णवर्णायाः तुलस्याः दलैः कृष्णं विष्वनन्तं गोविन्दं गरुडध्वजं दामोदरं हृषीकेशं पद्मनाभं हरिं प्रभुं एतैश्च नामभिः प्रभुं पूजयेत् । सुवर्णमयं तुलसीदलं कारयित्वा हेमीं विष्णुप्रतिमां विधाय विप्राय देया । भाद्रकृष्णाष्टम्यां श्रीकृष्णजन्माष्टमीनामकं व्रतमुक्तम् । अस्मिन् व्रते विविधैर्भक्ष्यभोज्यचोष्यलेह्यादिभिः आनन्दकन्दपरमानन्द-श्रीकृष्णस्यार्चनादिकं विधेयम् । भाद्रशुक्लाष्टम्यां राधाव्रतमुक्तमस्मिन्

दूर्वाभिः राधापूजनं दोरकं च धारणं कर्त्तव्यम् । अश्विनशुक्लाष्टम्यां दुर्गार्चनं दुर्गाप्रीतये होमः कुमारीपूजनं च कार्यम् । कार्तिक-कृष्णाष्टम्यां करकाख्यं व्रतमुक्तम् । कार्तिकसिताष्टम्यां गोपाष्टमी भवति । अस्मिन् दिने गोर्गन्धादिभिः पूजनं विधेयं गोधूमं पिण्डीभूतं भक्त्या प्रदाय तदनुगमनं कार्यम् । मार्गशीर्षकृष्णाष्टम्यां दर्भनिर्मित-मिथुनस्य पूजनमुक्तम् । मार्गशुक्लाष्टम्यां कालभैरवव्रतं कार्यमस्मिन् दिने कालभैरवसन्निधौ कीर्तनं जागरणादिकं च कार्यम् । पौषा-सिताष्टम्यां कुलसन्ततिर्वृद्धिहेतवेऽष्टकं श्राद्धं कार्यम् । पौषसिताष्टम्यां कल्मषकदम्बविनाशाय शिवपूजनं कार्यम् । माघसिताष्टम्यां भद्र-कालीव्रतं विधेयेम् । माघासिताष्टम्यां भीष्माष्टमी व्रतं विधेयम् । भीष्मपितामहस्य तुष्टये तर्पणादिकं कार्यम् । फाल्गुनसिताष्टम्यां शीत-लायाः देव्याः पूजनमुक्तम्, तस्याः आराधनमर्चनादिकं कथितम् ।

**व्रतप्रकरणविमर्शः**

अष्टदशाधिकशततमेऽध्याये (नवमीव्रतम्) चैत्रशुक्लाष्टम्यां राम-नवमीव्रतं भवति । अस्मिन् दिने मर्यादापुरुषोत्तमस्य जन्म जातम् । श्रीरामपूजनं तद्व्रतं च कार्यम् । वैशाखे चण्डिकापूजनं लिखितम् । ज्येष्ठेऽसिते सिते च पक्षे उमाव्रतमुक्तम्, तद्विधिश्च वर्णितः । आषाढे ऐन्द्रीव्रतविधानं तत्पूजनं तत्तुष्टये नक्तमुक्तम् । श्रावणेऽसिते सिते च दले कौमारीं चण्डिकां यजेत् । तद्व्रतं च कथितम् । भाद्रपदमासे नवम्यां नन्दाख्या देवी पूजनीया तद्व्रतं च कार्यम् । आश्विने सिते दले दुर्गानवमीव्रतं भवति । अपराह्णे शमीपूजनं कार्यम् । कार्तिक-शुक्लनवम्यामश्वत्थपूजनं तन्मूले तर्पणमर्चनं च कार्यम् । मार्गशीर्षे दले शुक्ले नन्दिनीव्रतं लिखितम् । नन्दिन्याः अर्चनादिकं कार्यम् । पौषे महामायापूजनं तद्व्रतं च कार्यम् । माघमासे दले शुक्ले महानन्दादेव्याः पूजनमुक्तम् । फाल्गुनमासेऽपि नन्दाख्यादेवी पजनीया ।

एकोनविंशत्यधिकशततमेऽध्याये चैत्रशुक्लदशम्यां धर्मराजपूजनं प्रोक्तम् । तद्व्रतं च कार्यम् । वैशाखे विष्णुपूजनं तदाराधनं च सुवर्णितम् । ज्येष्ठसितदशम्यां गरानन्दव्यतीपाताः । कन्येन्दुवृष-भास्करादयो दश योगाः समुत्पन्नाः । गङ्गास्नानेन दशविधानि पापानि विनश्यन्ति । अतोऽस्याः गङ्गादशमीति नाम जातम् । अस्मिन् दिने व्रतं होमः ब्राह्मणभोजनं जाह्नव्याः पूजनं च विहितम् । आषाढ-शुक्लदशमी पुण्यामन्वादिकैः स्मृता । अस्मिन् दिने जपो होमश्च स्वर्गदः प्रोक्तः । श्रावणसितदशमी सर्वपापहरा प्रोक्ता । अस्यां षोडशोपचारैः शिवपूजनं प्रोक्तम् । भाद्रपदशुक्लदशम्यां दशावता-राख्यं व्रतं भवति । अस्मिन्नहनि दशावताराणां पूजनं तीर्थस्नानं च कथितम्[1] । आश्विनसितदशम्यां निजगृहाङ्गणे चतुर्गोमयपिण्डानि विधाय तेषु रामलक्ष्मणभरतशत्रुघ्नानां सुविधिना पूजनं कार्यम् । अपराह्णे शस्त्रपूजनं नगराद् बहिर्गत्वा शत्रुप्रतिमां च विधाय शस्त्रादिभिस्तन्नाशश्च कार्यः । कार्तिकशुक्लदशम्यां सार्वभौम-व्रतमुक्तम् । अस्य व्रतेनानुष्ठानेन च मनुष्यः सार्वभौमपदं विन्दति । दिक्षु दशसु लोकपालानां कृते क्षेत्रपालाय च बलिदानमुक्तं निशायां माङ्गलिकं जागरणं च कार्यम् । मार्गशीर्षशुक्लदशम्यामारोग्यकं व्रतं लिखितम् । अस्मिन् दिवसे धर्मराजपूजनं विधेयम् । पौषसितदशम्यां विश्वेषां देवानामर्चनादिकं कथितम् तेषां व्रतं च कर्त्तव्यम् । माघसितदशम्यां अङ्गिरसादीनां देवानामाराधनं पूजनं च सुवर्णितम् । फाल्गुनशुक्लदशम्यां चतुर्दशयमानां पूजनं तत्तुष्टये दध्ना समन्वितमपि बलिदानं सुवर्णितम् ।

विंशत्यधिकशततमेऽध्याये चैत्रासितासितैकादश्यां निराहारः कार्यः । अस्यां विष्णुपूजनं विधेयम् । वैशाखकृष्णैकादशी वरुथिनाम्नी इयं कामदानाम्नी वैशाखशुक्लैकादशी मोहिनी नाम्नी च वर्तते । अनयो-

---

1. मत्स्यं कूर्मं वराहं च नरसिंहं त्रिविक्रमम् ।
   रामं रामं च कृष्णं च बौद्धं कल्किनमेव च ॥

र्व्रतं कार्यम् ।ज्येष्ठकृष्णैकादशी परानाम्नी ज्येष्ठशुक्लैकादशी निर्जला नाम्नी च ज्ञेया । ज्येष्ठकृष्णैकादश्यां त्रिविक्रमपूजनं ज्येष्ठशुक्लैकादश्यां हृषिकेशपूजनं च कार्यम् । आषाढकृष्णैकादशी योगनीनाम्नी अस्यां श्रीनारायणपूजनं विधेयम् । आषाढशुक्लैकादशी देवशयिनी इति अस्यां पीताम्बरपूजनं षोडशोपचारैश्च विधेयम् । श्रावणकृष्णैकादशी कामिकानाम्नी अस्यां श्रीधरपूजनं कार्यम् । श्रावणशुक्लैकादशी पवित्रा संज्ञिका । अस्याः व्रतेन नरः पूतो भवति । भाद्रपदकृष्णैकादश्याः अजा नाम, अस्मिन् दिने हरिपूजनं विधेयम् । भाद्रपदशुक्लैकादशी पद्माख्या अस्यां विष्णोः भगवतः षोडशोपचारैरर्चनं विधेयम् । आश्विनकृष्णैकादशी इन्दिरा नामिका । अस्मिन् दिने शालग्रामशिलाग्रे श्राद्धं करणीयमनेन विष्णुः प्रसीदति । इषस्य शुक्लैकादशी पाशाङ्कुशाख्या, अस्यामपि एकादश्यां हरिपूजनं कर्त्तव्यम् । निशायां जागरणं कीर्तनं च कार्यम् । कार्तिकासितैकादशी रमा नाम्नी अस्याः व्रतं विधाय केशवमर्चयेत् सुधीः । उर्ज्जस्य सितैकादशी हरिप्रबोधनी, अस्यां तुलसीपूजनं हरिपूजनं च कर्त्तव्यम् । तदनन्तरं हरेः प्रबोधः कार्यः । मार्गशीर्षकृष्णैकादशी उत्पन्ना नाम्नी मार्गशीर्षसितैकादशी मोक्षा नामधेया अनयोर्व्रतेन विष्णुपूजनेन च मोक्षप्राप्तिर्भवति । पौषमासस्यासितैकादशी सफला नामधेया पौषसितैकादशी पुत्रदा नाम्नी, अनयोर्व्रतेन सफलो भवति पुत्रांश्च विन्दति । माघकृष्णैकादशी षट्तिला, अस्यां व्रती तिलमर्दनं तिलस्नानं तिलहोमं तिलदानं तिलभक्षणं तिलतर्पणं च कुर्यात् । माघशुक्लैकादशी जयाख्या अस्मिन् दिने व्रती व्रतं कुर्याद् हरिमर्चयेत् । फाल्गुनासितैकादश्याः तथा फाल्गुनसितैकादश्याः । व्रतेन नरः मोक्षं कीर्तिं च लभते ।

एकविंशत्यधिकशततमेऽध्याये चैत्रशुक्लद्वादश्यां मदनव्रतं विधेयमस्मिन् कामरूपिणं हरिमर्चयेत् । काञ्चनं कामदेवं शुक्लाङ्गां

गुडोपेतं ताम्रपात्रं च दानं देयम् । वैशाखशुक्लद्वादश्यामुपवासः प्रकर्त्तव्यः । माधवपूजनं च सुविधिना कार्यम् ।

ज्येष्ठशुक्लद्वादश्यां व्रती त्रिविक्रमं पूजयित्वा तत्कीर्तनं च कुर्यात् आषाढशुक्लद्वादश्यां द्वादशद्विजान् मधुरान्नेन भोजयेद् व्रती । श्रावणशुक्लद्वादश्यां श्रीधरं व्रती पूजयेत् । भाद्रपदशुक्लद्वादश्यां विष्णुपूजनं ब्राह्मणभोजनं सौवर्णीं दक्षिणामन्नदानं च देयम् । आश्विनशुक्लद्वादश्यां व्रतिना पद्मनाभपूजनं कीर्तनं च कार्यम्, कार्तिकेऽसितद्वादश्यां गोवत्साद्वादशीव्रतमुक्तम् । तस्मिन् व्रते सवत्सां गां विलिख्य तस्याः सुगन्धिभिः चन्दनाद्यैरर्चनं कार्यम् । ऊर्जसित-द्वादश्यां दामोदरं देवमर्चयेत् । पक्वान्नेनार्कसंख्याकान् द्विजान् भोजयेत् । पश्चादपां पूर्णान् सवस्त्रान् द्वादशकुम्भान् तेभ्यो दद्यात्। गवां नीराजनं कार्यम् । मार्गशीर्षशुक्लद्वादश्यां साध्यव्रतं विधेयम् । अस्मिन् दिने धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणः यमः । त्वष्टा विवस्वान् सविता विष्णुः द्वादश ईरिताः एतैः सुनाम्नैः विष्णोरर्चनं कार्यम् । अस्मिन्नैव दिनेऽखण्डसंज्ञकं व्रतमुक्तमृषिभिस्तत्त्वदर्शिभिः । पौषासितद्वादश्यां रूपवतीव्रतमुक्तम्, पौषशुक्लद्वादश्यां सुजन्मद्वा-दशीव्रतमुक्तम् । अस्य व्रतद्वयस्य दशमितः आरम्भः कार्यः । घृतदानं व्रीहिदानं यवदानं रौप्यदानं च कथितम् । माघशुक्लद्वादश्यां विधिवद्भक्त्या शालिग्रामशिलां रौप्यपात्रे संस्थाप्य तदर्चनं विधाय तन्मुखे सुवर्णं न्यसेत् तदा व्रती सफलो भवेत् । एकादशी निवृता चेत् सूर्योदयतः पुरा तदा सा त्रिस्पृशा द्वादशी भवति । अस्याः व्रता-दिनाश्वमेधसहस्रस्य राजसूयसहस्रस्य च फलं लभते जनः । इयं सर्वक्रतुफलप्रदा सर्वपापहरा च प्रोक्ता । श्रवणर्क्षयुक्ता धवला द्वादशी सर्वसुखप्रदा निखिलतीर्थस्नानफलप्रदा च प्रोक्ता । मघा-नक्षत्रसमन्विता द्वादशी सर्वशत्रुविनाशिनी प्रोक्ता । फाल्गुनसित-द्वादश्यां व्रतिनां हाटकमयी हरिप्रतिमा पूजनीया ।

द्वाविंशत्यधिकशततमेऽध्याये त्रयोदशीव्रतवर्णनं प्रोक्तम् चैत्रशुक्ल-त्रयोदश्यां चन्दनात्मकं मदनपूजनं वैशाखशुक्लत्रयोदश्यां काम-देवपूजनं व्रतिना कार्यम् । ज्येष्ठमासे सितत्रयोदश्यां

दौर्भाग्यशमनं व्रतम् । आषाढशुक्लत्रयोदश्यामेकभक्तं व्रतं कार्यम् । श्रावणसित- त्रयोदश्यां रतिकामव्रतं च भवति । एभिः व्रतादिभिः स्त्रीणां वैधव्यवारणं सन्तानबर्धनं च भवति ।

भाद्रपदशुक्लत्रयोदश्यां गोत्रिरात्रव्रतं प्रोक्तम् । अस्मिन् व्रते हेममयं राजतं वा लक्ष्मीनारायणं विधाय तत्पूजनं कार्यम् । नन्दिन्याः गोश्च प्रदक्षिणा कार्या । आश्विनशुक्लत्रयोदश्यां त्रिरात्राशोकव्रतं भवति । अस्मिन् व्रते हेमस्याशोकं निर्माय तत्पूजनं करणीयम् । अनेन नारी अशोका भवति । कार्तिककृष्णत्रयोदश्यां सायंकाले व्रतिना यमप्रीतये गृहाद् बहिर्द्वारे तैलदीपं प्रज्वालनीयम् । अनेन यामी वेदना न भवति । कार्तिकसितत्रयोदश्यामेकभोजी नरो भवेत् । शिवसन्निधौ घृतदीपो व्रतिना प्रज्वालनीयः । तत्प्रीतये मन्त्रजपश्च कर्त्तव्यः[1] । मार्गसितत्रयोदश्यामनङ्गपूजनं कार्यं द्विजदम्पती घटे मङ्गलपट्टे वा भोजयेत् । पौषशुक्लत्रयोदश्यां हरिपूजनं घृतपात्रस्य दानं देयम् । माघधवलत्रयोदशीतः दिनत्रयं माघस्नानं कार्यम् । अनेनाखिलतीर्थस्नानफलमश्वमेधसहस्रफलं च विन्दति जनः । फाल्गुनसितत्रयोदश्यां जगन्नाथं नमस्कृत्य धनदव्रतं विहितम् । अस्मिन् दिने महाराजो यक्षपतिः पूजनीयो व्रतिना ।

त्रयोविंशत्यधिकशततमेऽध्याये चतुर्दशीव्रतवर्णनं विहितम् । मधुमाससितचतुर्दश्यां कुङ्कुमागुरुचन्दनैः शिवार्चनं कार्यम् । राधा- धवलचतुर्दश्यां नृसिंहव्रतमुक्तमस्मिन् व्रते श्रीनृसिंहोऽर्चनीयो व्रतिना । ज्येष्ठधवलचतुर्दश्यां धेनुसहस्रव्रतं प्रोक्तम् । आषाढसितचतुर्दश्यां शिवाराधनं कार्यम् । आभ्यां व्रताभ्यां व्रती सर्वदा सफलो भवति । नभोधवलचतुर्दश्यां पवित्रारोपणं व्रतं भवति । तद् व्रतं स्व- शाखोक्तविधिना कार्यम् । भाद्रपदसितचतुर्दश्यामनन्तव्रतमुक्तम् ।

1. नमो रुद्राय भीमाय नीलकण्ठाय वेधसे ।
कपर्दिने सुरेशाय व्योमकेशाय वै नमः ॥
इत्यादि ।

अस्मिन् व्रतेऽनन्तभगवतश्चतुर्दशग्रन्थियुक्तस्यापिडोरकस्य च पूजनं कार्यम् । गोधूमप्रस्थपिष्टिकं शर्कराज्याक्तानन्ताय निवेदनीयम् । उद्यापनं सर्वतोभद्रपूजनं होमः शय्यादानं धेनुदानं च कार्यम् । इषकृष्णचतुर्दश्यां विषशस्त्राम्बुवह्निभिः सर्पश्वापदवज्राद्यैः हतानां ब्रह्मघातिनां क्रिया श्राद्धं तर्पणादिकं कार्यम् । आश्विनधवलचतुर्दश्यां धर्मराजस्यार्चनादिकं कार्यम् । उर्ज्जकृष्णचतुर्दश्यां विधूदये तैलाभ्यङ्गं विधाय स्नात्वा धर्मपूजनं चतुष्पथे गृहाद्बाह्यप्रदेशे वा दीपप्रज्वालनं कर्त्तव्यम् । अनेन धर्मराजः प्रसीदति मानवो नरकादभयो भवति ।

कार्तिकशुक्लचतुर्दश्यां पाशुपतव्रतं कार्यम् । अस्मिन् दिने भगवल्लिङ्गं द्रोणपुष्पैर्विल्वदलैरर्कपुष्पैश्चार्चनीयम् । केतकीपुष्पैः फलैर्मिष्ठान्नैश्च लिङ्गपूजनं विधेयम्[1] । अस्मिन्नेव दिने ब्रह्मकूर्चव्रतं भवति । रात्रौ पञ्चगव्यपानं च कार्यम्[2] । मार्गशुक्लचतुर्दश्यामेक-भुक्तो नरो भवेत् । वृषभहाटकयोर्दानं दद्यात् । पौषशुक्लचतुर्दश्यां विरूपाक्षव्रतं भवति । अस्मिन् त्रिलोचनस्यार्चनमाराधनं विधेयम् । माघसितचतुर्दश्यां यमव्रतमुक्तम् । अस्मिन्नहनि सूर्योदयात् पूर्वमेव स्नात्वा यमतर्पणं विधातव्यम् । फाल्गुनकृष्णचतुर्दश्यां शिवरात्रिव्रतं स्मृतम् । अस्मिन् व्रते दिवसेऽथवा निशायां शिवस्य पूजनमाराधनं कीर्तनं विधातव्यम् । निशीथिन्यां प्रहरे प्रहरे चतस्त्रः पूजाः कार्याः ।

चतुर्विंशत्यधिकशततमेऽध्याये पूर्णिमाव्रतमुक्तम् । चैत्रपूर्णिमायाः मन्वादिसंज्ञा । अस्यां सान्नोदकं कुम्भं च देयम् । वैशाख्यायां

---

1. अन्येषु पुराणेषु केतकीपुष्पेण शिवार्चनं निषिद्धम् ।
   केतक्याः नाद्रीयेत् पुष्पमिति वचनात् ।
2. पञ्चगव्यनिर्माणप्रकारः –
   कपिलायाश्च गोमूत्रं कृष्णायाः गोमयं तथा ।
   श्वेतायाः क्षीरमुदितं रक्तायाः दधि तथा ॥
   कर्बुरायाश्च घृतं मेलयेत् ॥

पूर्णिमायां धर्मराजपूजनं स्मृतम् । अस्मिन् व्रते शृतान्नमुदकुम्भं च दानं देयम् । तथा च सखुरं सशृङ्गं सतिलं सहिरण्यं कृष्णाजिनं वेदविदुषे दानं देयम् । ज्येष्ठपूर्णिमायां वटसावित्रिकं व्रतं स्मृतम् । अस्मिन् व्रतदिने कृतोपवासपुरुषेण सलिलेन वटवृक्षः सिञ्चनीयः । सशताष्टप्रदक्षिणं कार्यम् । आषाढपूर्णिमायां गोपद्मव्रतमुच्यते । अस्मिन् व्रते शङ्खचक्रगदापद्मरमागरुडशोभितो विष्णुः पुरुषसूक्तमन्त्रैः पूजनीयः । श्रावणपूर्णिमायां गौरीरूपां कोकिलां पूजयेत् । यतो हि गौरी भगवत्या कोकिलायाः रूपमङ्गीकृतम् । अस्मिन्नेव दिने वेदोपकरणं ऋषितर्पणं रक्षाबन्धनं च भवति ।

प्रौष्ठपद्यां पौर्णमास्यामुमामहेश्वरव्रतमुक्तम् । सोमशिवोऽर्चनीयः । आश्विनपूर्णिमायां कोजागरव्रतमुक्तम् । अस्मिन् व्रते सौवर्णमयी लक्ष्मी पूजनीया । कार्तिकपूर्णिमायां कार्तिकेयव्रतमुक्तम् । अस्मिन् व्रते सर्वशत्रुजयाय कार्तिकेयपूजनं तदाराधनं विधेयम् । निशामुखे प्रदीपः प्रज्वालनीयः । वृषोत्सर्गश्च कार्यः । मार्गशीर्ष्यां पूर्णिमायां सर्वकामसमृद्धये व्रतिना स्वर्गाढ्यं लवणाढकं शान्ताय द्विजाय देयम् । पुरन्दरश्च सोमश्च तथातिष्यो बृहस्पतिः पञ्चैते पुष्ययुक्तायां पूर्णिमायां जगद्बलात् । अलङ्कृतं पुनश्चक्रुः सौभाग्योत्सवकेलिभिः । अस्मिन् दिने हरिशक्रेन्दुपुष्पेज्याः पूज्याः । सर्वौषधिभिः स्नानं कार्यं नवांशकं च धारणीयम् ।

माघ्यां पौर्णमास्यां तिलकार्पासकम्बलरत्नकञ्चुकोष्णीषपादत्राणानि देयानि । अथवा केवलं धनं दातव्यम् । फाल्गुनपूर्णिमायां होलिका-पूजनं विधेयम्[1] । तथा च निशामुखे काष्ठानि उपलानि स्तूपरूपाणि विधाय प्रज्वालनीयानि । ततः परिक्रम्योत्सवः कार्यः प्रार्थना च कार्या । चैत्रवैशाखयोस्तत्र दर्शे पितृणामर्चनं कथितम् ।

---

1. होलिका राक्षसी चेयं प्रह्लादाभयदायिनी ।
ततस्तां प्रदहत्येवं काष्ठाद्यैर्गीतमङ्गलैः ॥

ज्येष्ठमासेऽमायां सवित्र्या व्रतं कार्यम् । अनेन व्रतेन नारीणामखण्डं सौभाग्यं भवति । नभसि भाद्रे च पितृश्राद्धं दानं होमश्च करणीयाः । तथा भाद्रे कुशोत्पाटनं कार्यम्[1] । इषामायां विशेषणपितृणां श्राद्धं तर्पणं च विधेयम् ।

ऊर्जमायां देवागारगृहेषु च । नद्यारामतडागेषु चैत्यं गोष्ठापणेषु च दीपदानं प्रकर्त्तव्यम् । सुवर्णमुद्रायाः रौप्यमुद्रायाः वा हेमनिर्मितायाः लक्ष्मीप्रतिमायाः विविधैर्मिष्ठान्नैः भक्ष्यभोज्यलेह्यादिभिरर्चनं कार्यम्, द्यूतक्रीडाऽपि कर्त्तव्या । अनने मामकीनमस्मिन् वर्षे जयं पराजयं वा इति ज्ञायते । मार्गशीर्षेऽपि केवलपितृपूजा ब्राह्मणभोजनं च कार्यम् । पौषे माघे चामायामपि पितृश्राद्धं विधेयम् । तथा च माघे मौन्ययायां दुग्धविकारे सुवर्णरत्नादिकं न्यस्य गुप्तदानं देयम् । फाल्गुनेऽमायामपि पितृश्राद्धं कार्यम् ।

**बृहन्नारदीयपुराणस्योत्तरखण्डे कर्मकाण्डः**

प्रथमाध्याये एकदश्याः उपवासस्य माहात्म्यं सुवर्णितम् । एकादश्याः मेनोपवासो विहितस्तेन सर्वासां गङ्गादीनां स्नानजं पुण्यमधिगतम् ।[2]

द्वितीयाध्याये कर्मकाण्डकृते देवपितृकार्येषु च तिथीनां क्षयं बार्द्धक्यादिकं समुद्दृङ्कितम् ।

तृतीयेऽध्याये कल्मषकदम्बौघविनाशाय भगवद्भक्तेरधिकं माहात्म्यं सुवर्णितम् ।

षष्ठेऽध्याये कृष्णनामोच्चारणस्य नमस्कारस्य च महान् महिमा वर्णितः[3] ।

---

1. हुं फट् इत्यनेन मन्त्रेण कुशोत्पादनं कार्यम् ।
2. न गङ्गा न गया भूप न काशी न च पुष्करम् ।
   न चापि कौरवं क्षेत्रं न रेवा न च देविका ॥
3. एकोऽपि कृष्णस्य कृतः प्रणामी दशाश्वमेधावभृथेन तुल्यः ।
   दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥

द्वाविंशेऽध्याये कार्तिकमासव्रतमाहात्म्यं, स्नानमाहात्म्यं तथा च कार्तिके भक्ष्याभक्ष्यं वर्ज्यमवर्ज्यञ्च सुवर्णितम् ।

एकत्रिंशेऽध्याये माघे मासे स्नानस्य दानस्य सितैकादश्याश्च महान् महिमा वर्णितः ।

अष्टत्रिंशेऽध्याये गङ्गायाः निखिलतीर्थेभ्यः वैशिष्ट्यं सुवर्णितम् ।

एकोनचत्वारिंशेऽध्याये गङ्गायां स्नानस्याधिकं पुण्यं निखिलाघौघक्षयकरं वर्णितम् ।

चत्वारिंशेऽध्याये गङ्गायाः स्थलविशेषस्य तत्र स्नानस्य च महान् माहात्म्यं कथितम् ।

एकचत्वारिंशेऽध्याये गङ्गायां स्नानस्य देवानां पितृणाञ्च यव-कुशतिलादिभिस्तर्पणस्य सर्वेषां दानानां च विधिः लिङ्गार्चनस्य महत्पुण्यं वर्णितम् ।

द्विचत्वारिंशेऽध्याये गुडधेनोः दानस्य विधिः विधानं सुवर्णितम् । तत्फलं च समुट्दृङ्कितम् ।

त्रिचत्वारिंशेऽध्याये गङ्गायां सर्वेषाममराणामर्चनादिकं भागीरथ्यां मरणस्य च महान् महिमा सुवर्णितः ।

चतुःचत्वारिंशेऽध्याये गयायां पिण्डदानस्य सम्यक् विधिना विहितस्य श्राद्धस्य च महत्पुण्यं वर्णितम् ।

पञ्चचत्वारिंशेऽध्यायेऽपि पिण्डदानस्यैव महान् प्रभावो महान्माहात्म्यं चोक्तम् ।

षट्चत्वारिंशेऽध्याये गयाकूपे पिण्डदानस्याश्वमेधयज्ञसमं फलमिति वर्णितम् ।

सप्तचत्वारिंशेऽध्याये सन्ध्यायाः सपिण्डीकरणश्राद्धस्य च प्रेतस्य मृतस्य च कृते मोक्षदमिति सुचारुरूपेण लिखितम् ।

अष्टचत्वारिंशेऽध्याये काश्यां कृतस्य स्नानस्य तथा दानस्य श्रीविश्वनाथकृतपूजनस्य च दशाश्वमेधसमं पुण्यं कर्ता विन्दति वै ध्रुवम् ।

एकोनपञ्चाशत्तमेऽध्याये काशीतीर्थयात्रायाः तत्र स्थितानां स्थापितानां च देवानामर्चनं महत्पुण्यदमित्युक्तम् ।

पञ्चाशत्तमेऽध्याये केषु केषु मासेषु च देवैः गन्धर्वैः सिद्धैः पन्नगैश्च यात्रा कृता तत्रस्थाः देवाश्च पूजिताः ।

एकपञ्चाशत्तमेऽध्याये किरणा धूतपापा पुण्यतोया सरस्वतीगङ्गा-यमुनासु विधिनाविधिना वा विहितस्य श्राद्धस्य दानस्य स्नानस्य च महत्पुण्यदमित्युक्तम् ।

द्विपञ्चाशत्तमेऽध्याये समुद्रस्नानस्य तत्र कृतस्य श्राद्धस्य च महत्पुण्यं वर्णितम् ।

द्विषष्टितमेऽध्याये प्रयागराजे कृतस्य श्राद्धस्य तर्पणस्य दानस्य च पितृणां कृतेऽक्षयफलदमित्युक्तम् ।

त्रिषष्टितमेऽध्याये यमुनायाः दक्षिणे तटेऽग्नितीर्थं पश्चिमे तटे धर्मराजतीर्थं च विद्यते । तत्र कृतस्य श्राद्धस्य स्नानस्य दानस्य च सर्वतीर्थसमं फलप्रदमित्युक्तम् ।

चतुष्षष्टितमेऽध्याये कुरुक्षेत्रप्रमाणं तस्मिन् क्षेत्रे कृतस्य श्राद्धस्य, और्ध्वदेहिकक्रियायाः अपमृत्युमृतस्य पुरुषस्य कृते मोक्षदमपमृत्यु-विनाशकमुक्तम् ।

पञ्चषष्टितमेऽध्याये कुरुक्षेत्रे बहूनि तीर्थानि सन्ति, तेषु तीर्थेषु सूर्यग्रहणे चन्द्रग्रहणे च स्नानदानयोर्महत्पुण्यं वर्णितम् ।

षट्षष्टितमेऽध्याये हरिद्वारस्य माहात्म्यस्य श्रवणस्य तत्र विहित-स्थानानानुष्ठानादेः सत्वरं फलदमित्युक्तम् ।

सप्तषष्टितमेऽध्याये बद्रीनाथस्य यात्रायाः स्नानस्य दानस्य दर्शनस्य च महत्पुण्यदमिति लिखितम् ।

सप्ततितमेऽध्याये एकं प्रभासाख्यं तीर्थं वर्तते तत्र श्राद्धेन देवानां पितृणाञ्च तर्पणेन दानेन च सर्वतीर्थस्नानफलं लभते ।

एकसप्ततितमेऽध्याये पुष्करतीर्थस्य दर्शनं, तत्र च स्नानं दान-स्नानकाले तन्नामोच्चारणं च महत्पुण्यदं भवतीति लिखितम् ।

द्विसप्ततितमेऽध्याये गोदावर्य्यां पञ्चवट्यां स्नानस्य दानस्य च महान् महिमा वर्णितः ।

त्रिसप्ततितमेऽध्याये त्रयम्बकेश्वरस्यार्चनं स्नानं अभिषेकः, रुद्राध्यायस्य च पाठो महान् पुण्यदः सकलकामदः पुत्रदश्च प्रोक्तः ।

चतुःसप्ततितमेऽध्याये गोकर्णाख्यस्य तीर्थस्य दर्शनादिकं मोक्षदं अक्षय्यपुण्यदं प्रोक्तम् ।

. सप्तसप्ततितमेऽध्याये नर्मदातीर्थे स्नानेन दानेन श्राद्धेन पुराण-श्रवणेन च नरो विन्दति मोक्षफलम् ।

अष्टसप्ततितमेऽध्याये अवन्तिकायां स्थितस्य महाकालाख्यस्य प्रभोः पूजनाद् दर्शनाद् रुद्राध्यायस्य पठनाच्च नरः समीहितां सिद्धिंलभते । तस्यामेव कपालमोचनाख्यं तीर्थं वर्तते । यत्र भक्त्या स्नानाद्दानाद् श्राद्धाच्च ब्रह्मापि विशुद्ध्यति । महाकालवनेऽसंख्यानि लिङ्गानि सन्ति, तेषां विधिना अर्चनादभिषेकाच्च जन्मजन्मान्तराणि पापवृन्दानि विनाशं यान्ति वै ध्रुवम्, तथा शिवो याति प्रसन्नताम् ।

एकोनाशीतितमेऽध्याये मथुरायां मधुवनं तालाह्वयं वनं, कुमुदाख्यं वनं, काम्यवनं, बहुलाराख्यं वनं, भद्रवनं, खदिरवनं महावनं, लोहजङ्घं विल्वारण्यं वनं भाण्डीरं वनमेवमेकादशानि काननानि सन्ति, येषु स्नानाद् देवानामृषीणां पितृणां च तर्पणाद् ऋणत्रयाद् विमुच्यते जनः । शिवविष्णू च प्रसीदतस्तयोः प्रसादेन नरस्य निखिलाः कल्मषकदम्बाः नाशं यान्ति । तत्रैव विश्रान्तिसञ्ज्ञकं तीर्थं, रामतीर्थं, संसारमोक्षणं तीर्थं, प्रयाख्यं तीर्थं, कनखलतीर्थं, तिन्दुकं तीर्थं, पट्टस्वामितीर्थं ध्रुवतीर्थं, ऋषितीर्थं मोक्षतीर्थं, बोधिनीतीर्थं कोटितीर्थं च विद्यते । यत्र श्राद्धेन पितरो मोक्षमधिगच्छन्ति एवं कुण्डान्यपि प्रभूतानि वर्तन्ते । येषु स्नानेन जपादिना च नरः स्वर्गमेति ।

अशीतितमेऽध्याये वृन्दायाः तदाख्यायाः, कृष्णप्रियायाः वनं वृन्दावनम्, तस्मिन् बहूनि कुण्डानि सन्ति, येषु स्नानदानादिना मनुष्यः मुक्तिमधिगत्य विष्णुलोकं प्रयाति ।

**भागवतमहापुराणोक्तकर्मकाण्डः**

अतीतेऽध्याये नारदपुराणोक्तकर्मकाण्डविवरणं विधायात्र क्रम-प्राप्तं तृतीयं भागवतमहापुराणोक्तकर्मकाण्डः विचाराय प्रस्तूयते । एतस्य भागवतमहापुराणस्य नारदपुराणेन सह का सङ्गतिः पूर्वापर-भावरूपा इति भगवता कृष्णद्वैपायनेन वेदव्यासेन सप्तदशपुराणानि निर्मितानि परं तथापि अशान्तो भूत्वा चिन्तामग्नः आसीत् । तद-वसरे देवर्षिः नारद एव तत्रोपेतः तदीयां चिन्तां प्रशमनाय यथा सूतवचनं भागवतमहापुराणस्य प्रथमस्कन्धे पञ्चमेऽध्याये वर्तते -

**अथ तं सुखमासीनमुपासीनं बृहच्छ्रवाः ।**
**देवर्षिः प्राह विप्रर्षिः वीणापाणिः स्मयन्निव ॥**
**पाराशर्यमहाभाग भवतः कच्चिदात्मना ।**
**परितुष्यति शरीर आत्मा मानस एव वा ।**
**जिज्ञासितं सुसम्पन्नमपि ते महद्भुतम् ।**
**कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥**

एवंरूपेण देवर्षिणा व्यासः प्रोक्तः—

**जिज्ञासितमधीतं च यत्तु ब्रह्म सनातनम् ।**
**अथापि शौचस्यात्मानमकृतार्थं इव प्रभो ॥**

एवमुक्तो वेदव्यासः महाभारतस्य सप्तदशपुराणस्य च प्रणयनानन्तरं स्वस्य चिन्ताकारणं नारदं पप्रच्छ, यदा तदा नारदेन एवं निवेदितः यद् भवता भगवतश्चरित्रं जानता अपि उक्तपुराणेषु विशुद्धं नोक्तम्, अतः वासुदेवस्य विशुद्धचरित्रं लीलाविभवं प्रकाशयतु । तदनन्तरं एव वेदव्यासेन भगवता भागवतमहापुराणं प्रणीतम् । अस्मिन् पुराणे तदन्तर्भूतकर्मकाण्डविषया भागवतानां वैष्णवानां कृते विशेषतया वर्णितः ।

प्रथमस्कन्धे पञ्चमेऽध्याये श्रीमद्भागवतकथाश्रवणेन कायिक-वाचिकमानसिकसांसर्गिककल्मषकदम्बा आर्द्रशुष्कलघुस्थूलरूपाः तुर्णं यान्ति नाशताम् । अस्य श्रवणेन गोलोकप्राप्तिर्भवति, यल्लोकं

योगाभ्यासैरतैः विजितेन्द्रियैः योगिभिर्न प्राप्यते[1] अर्थात्तेषां कृतेऽपि दुर्लभमिति ।

अस्य कथा प्रेतयोनिहरा प्रोक्ता । श्रीव्यासेन महात्मना धुन्धुकारी महापापो मोक्षं प्राप हि सत्वरम् ।

श्राद्धेऽपि पठनं पितृणां मुक्तिदायकम् । ईदृशं फलं गङ्गादिषु स्नानशतैः धैन्वादिदानशतैरपि न प्राप्नोति मानवः । अनेन आधिभौतिकमाध्यात्मिकमाधिदैविकं तापत्रयं तूर्णं नाशमियन्ति[2] ।

इत्थमस्य श्रीमद्भागवतस्य माहात्म्यं सुवर्णितम् ।

**चतुर्थस्कन्धे अष्टमेऽध्याये**

एकदा सुनीतिपुत्रो ध्रुवो स्वपितुरुत्तानपादभवनं प्रासादमिति वा अगमत् । तत्र गत्वा पितुरङ्के उपविवेश ।

तमुपविष्टं विलोक्य विमाता सुरुचिः चुक्रोध उवाच च — ममोदराल्लब्धजन्मा यदा भवितासि तदाऽस्मिन्नङ्के उपवेष्टुमर्हो भविष्यसि । इत्थं क्रोधाग्निना दह्यमानया रक्तनयनया तया स अवमानितः । बलात् पितुरुत्सङ्गादुद्धृत्य भूमौ ध्रुवो क्षिप्तः । स्वसन् तारस्वरेण रुदन् नानाविधाभिर्दुरुक्तिभिरपमानितः स्वजननीं अन्तिके जगाम, घटितघटनां श्रावयामास । शोकदावाग्निना दग्धा स्वसुतं ध्रुवमुवाच आनन्दकन्दस्य निखिलभक्तजनरञ्जकस्य सकलकष्टहर-स्यसुखदस्य च परमपितुरुत्सङ्गं भज । एवं जनन्या बोधितो ध्रुवः उग्रतपसे काननं गच्छन् पथि यदा नारदेन बालः पृष्टः तदा स स्वोदन्तं प्रार्थयामास तस्मै ॐ नमो भगवते वासुदेवाय इत्यस्य परमपूतस्य

---

1. वाताम्बुपर्णाशनदेहशोषणै-
स्तपोभिरुग्रैश्चिरकालसञ्चितैः ।
योगैश्च संयान्ति न तां गतिं वै
सप्ताहगाथाश्रवणेन यान्ति याम् ॥
2. सच्चिदानन्दरूपाय विश्वोत्पत्यादिहेतवे ।
तापत्रयविनाशाय श्रीकृष्णाय वयं नुमः ॥

मन्त्रराजस्योपदेशं ददौ नारदः । तस्य मन्त्रस्य मधुवनं गत्वा परमपितुः परमात्मनः प्रीतये नारदोक्तमन्त्रविधिना हरेरर्चनं जपं स्तवनं च चकार ध्रुवः । अचिन्त्यः मणिमन्त्रौषधीनां प्रभावः इति सूक्त्या तूर्णमेव मन्त्रराजप्रभावतः समीहितां सिद्धिं विविन्द ।

षष्ठस्कन्धेऽष्टादशाध्याये जपे होमे दाने च ये ये नियमाः नखरोम-छेदनपरान्ता भक्षणानृतभाषणादयः ते ते सुष्ठु प्रकारेण सुवर्णिताः ।

षष्ठे स्कन्धे एकोनिविंशतितमेऽध्याये सिते मार्गशीर्षे पुंसवनव्रतस्य धारणं तद्होमः जपश्च कथितः । येन पुरुषः समीहितां कामनामधिगच्छति नारी चाखण्डसौभाग्यं पुत्रादीन् कीर्तिं श्रियं च प्राप्नोतीति वर्णितम् ।

सप्तमे स्कन्धे सप्तमेऽध्याये - गुरुशुश्रुषया श्रद्धया कथा श्रवणं हरेः कीर्तनं च वर्णितम् । तथा चानन्दकन्दश्रीकृष्णस्याराधनं पूजनं तद्गुणकर्मानुकरणं षड्वर्गजयश्च सुचारुरूपेण समुट्टङ्कितः । यानि फलानि भगवदाराधनात् प्राप्नुवन्ति तानि फलानि न दानैर्नेज्यया न स्नानैः न तपोभिश्च लभते नरः इति विशदविधिना भगवता व्यासेन वर्णितम् । यतो हि व्यासो भगवान् स्वयम् । सप्तमे स्कन्धे दशमेऽध्याये मौनेन स्नानभोजनादेः साधोरतिथेश्च पूजनमाराधनं सत्कारश्च सुवर्णिताः, तथाच प्रेतकृत्यानि कार्याणीति वर्णितानि । सप्तमे स्कन्धे एकादशेऽध्याये पुरुषाणां कृते सनातनधर्मस्योपदेशः श्रीव्यासेन समुट्टङ्कितः । तथा च प्रेतकृत्यानि कार्याणीति वर्णितानि ।

सप्तमे स्कन्धे एकादशेऽध्याये पुरुषाणां कृते सनातनधर्मस्योपदेशः श्रीव्यासेन समुट्टङ्कितः । तथा च -

**सत्यं दया तपः शौचं तितिक्षा शमो दमः ।**
**अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥**[1]

---

1. श्रीमद्भागवतपुराण 7. 10 ।

अस्मिन् पद्ये वर्णितानां दशविधधर्मलक्षणानां विशदरूपेण वर्णनं विहितम् ।

समेषां ब्राह्मणक्षत्रियवैश्यशूद्राणां ये ये धर्माः कल्याणप्रदा विद्यन्ते तेषां निखिलानां धर्माणां विशदरूपेण विस्तारेण च वर्णनं कृतम् । तेषामाचरणं नानाचरणेन च धर्माधर्मौ अपि कथितौ । नारीणां कृते ये ये धर्माधर्माश्च सन्ति तथा च ये ये नियमाः सत्यप्रियभाषणादय-स्तेषामपि सर्वेषां करणेऽकरणे च अभ्युदयनिःश्रेयसरूपाः सिद्धयः सन्ति, तासां सर्वासां विशदवर्णनं विहितम् ।

सप्तमे स्कन्धे द्वादशेऽध्याये ब्रह्मचारीणां कृते उपवीतधारणं मेखलाजिनदण्डकमण्डलुनां धारणं सन्ध्यावन्दनं वेदाध्ययनं गुरुशुश्रूषणं च सम्यग् रूपेण वर्णितम् ।

सप्तमे स्कन्धे त्रयोदशेऽध्याये संन्यासः कर्मणां न्यासः इति संन्यासः संन्यासवतां मानवानां ये धर्माः लाभदाः, ये चालाभदाः सन्ति, तेषां वर्णनमपि कृतम् ।

सप्तमे स्कन्धे चतुर्दशाध्याये गृहस्थानां कृते केन कर्मणा मोक्षो भवति, केन चामोक्षो भवतीत्यपि समुट्टङ्कितम् ।

अष्टमस्कन्धे तृतीयेऽध्याये — गजेन्द्रकृतभगवत्स्तवनं भगवताराधनं भगवत्कीर्तनं च वर्णितम् ।

अष्टमस्कन्धे षोडशेऽध्याये कश्यपेन देवमात्रेऽदित्यै गर्भरक्षायै हरिप्रियस्य पयोव्रतस्य विधिस्तथा मन्त्राश्च सम्यग्रूपेण वर्णिताः[1] ।

विष्णुप्रीतये हरिपूजनं होमं द्विजतर्पणं हरेराराधनं च वर्णितम् । श्रोत्रियः ज्ञानसम्पन्नाः विजितेन्द्रिजाः षट्कर्मसमन्विताः अलोलुपाः

---

1. नमस्तुभ्यं भगवते पुरुषाय महीयसे ।
 सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥
 इत्यादि ।

अदाम्भिका सर्वाङ्गसम्पन्नाः द्विजाश्च भोजनीयाः । एतदपि पयोव्रताङ्गभूतं ब्राह्मणभोजनं वर्णितम् ।

अष्टमे स्कन्धेऽष्टादशाध्याये भगवतो वामनस्य जन्म वर्णितम् । सप्रजापतिभिः ऋषिभिर्वामनस्य निखिलानि नामकरणान्नप्राशन-चूडाकरणयज्ञोपवीतरूपाणि कर्माणि कारितानि । वामनाय सवित्रा सावित्रीदत्ता बृहस्पतिना ब्रह्मसूत्रं प्रदत्तं, कश्यपेन मेखला दत्ता, भूम्या कृष्णाजिनं दत्तं दण्डः सोमेन प्रदत्तः कोपिनाच्छादनं मात्रा द्यौः छत्रं च दत्तम् ।

इत्थं सर्वैः सम्भूय वामनभगवतः संस्काराः कृताः । यानि यानि च वस्तूनि संस्कारसाधनभूतानि तानि तानि च दत्तानीति वर्णितम्[1] ।

दशमे स्कन्धे अष्टमेऽध्याये श्रीवसुदेवेन — पुत्रे जाते सति श्री-गर्गनामा निजपुरोहितः आहुतः प्रार्थितश्च । तत्रभवन्तोभवन्तोऽस्य सद्योजातस्य शिशोः (अर्भकस्य) वेदोक्तरीत्या संस्कारान् कुर्वन्तु, यतो हि भवन्त एव यदुनां विख्याताः सदाचार परायणाः वेदवेदाङ्ग-तत्त्वज्ञाः कर्मकाण्डनिष्णाताः पुरोहिता इति निशम्य श्रीमता गर्गाचार्येण विनायकपूजनानन्तरमाभ्युदयिकश्राद्धं पुण्याहवाचनं च गर्गनाम्ना तेन तत्पुरोहितेन पित्रा कारितम् । तदनन्तरं मेधा-जंननसंस्कारो जनकेन जिह्वायां मधुना सुवर्णशलाकया कृतः (अर्थाद् जिह्वायां ओङ्कारस्तेन व्यलेखि) ततो जातकसंस्कारः नामकरणसंस्कारश्च विधिविधानेन सहेतुकः युगानुसारं श्रीकृष्णचन्द्र इति नामकरणसंस्कारः श्री गर्गाचार्यादेशेन वसुदेवेनाकारि[2] ।

---

1. तस्योपनीयमानस्य सावित्री सवितात्रवीत् ।
   बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥
   ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ।
   कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ इत्यादि ।
2. यथा भागवता व्यासेन प्रतिपादितम् — आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लोरक्तस्तथापीत इदानीं कृष्णतां गतः ॥

अनेनैव विधिविधानेन रोहिण्यां समुत्पन्नस्य निजशिशोः निखिलाः संस्काराः वसुदेवेन सम्पादिता इति – अष्टमाध्याये सुवर्णितम् ।

एकादशे स्कन्धे सप्तदशाध्याये भगवता नारायणेन सर्वेषां वर्णानां कृते धर्मस्य निरूपणं विहितम् । यथा ब्राह्मणानां कृते शमः दमस्तपः शौचं सन्तोषः शान्तिरार्जवं भगवद्भक्तिः सर्वभूतेषु दया सत्यं चेति विशदरूपेण वर्णितम् । क्षत्रियाणां कृते धर्मस्योपदेशः एवं विहितः यथा तैः सर्वदा येन तेजसो वृद्धिः स्यात्, तादृशकार्यकार्यं बलमपि उत्पादनीयम् । यतो हि वीरभोग्या वसुन्धरा । क्षत्रियैः धैर्यं कदापि न त्याज्यं धीरास्तरन्ति विपदां ननु दीनचित्ताः । शूरता तितिक्षा, उदारता, उद्यमः स्थैर्यं च न परिहार्यम् । वैश्यैः आस्तिक्यं दानं निष्ठा अदम्भः ब्राह्मणानां दानादिना सेवा च विधेया ।

शूद्रैः द्विजदेवधेनूनां पूजनमाराधनं सेवनं च सदा कार्यम् ।

ब्रह्मचारिभिः गुरुकुले निवसद्भिः मेखलाजिनदण्डसूत्रकमण्डलुः जटा च सदा धारणीया । गायत्रीमन्त्रजपः शूद्रं विहाय सर्वैः करणीयः । स्नाने भोजने होमे जपे यज्ञे च नखरोमादीनां छेदनं न विधेयम् । यतो हि तेषां कृन्तने (कर्तनेन वा) सूतकं जायते । सूतकान्वितो जनः उपर्युक्तानि कर्मणि कर्तुमनर्हो भवति । त्रिकाल-सन्ध्या शूद्रैर्विना सर्वैः वर्गैः करणीया । तीर्थानामटनं तेषु च स्नानदानादीनि सम्यग् वर्गितानि । सति समये वेदाध्ययनं शास्त्रचिन्तनं हरिचिन्तनं परहितचिन्तनं च विधेयम् ।

ऋणत्रयस्य विनाशाय यज्ञतर्पणश्राद्धानीति च कर्त्तव्यानीति सुवर्णितानि ।

एकादशे स्कन्धेऽष्टादशेऽध्याये तृतीयेऽऽश्रमे (वानप्रस्थे) वने निवसता पुरुषेण बाल्ये यौवने कृतानि बहुविधानि दुष्कर्माणि तेषां निरासाय ग्रीष्मर्तौ पञ्चाग्निसेवनं विधेयम् । वर्षर्तौ वर्षायां वृष्टौ च बहिर्निवासः सदा कार्यः ।

शिरदतौं आकण्ठो जलनिवासो विधेयः । अन्यान्यपि नाना-विधानि तपांसि विधेयानि । अग्निपक्वानि कालपक्वानि अन्नानि भोक्तव्यानि अग्निहोत्रं दर्शः पूर्णमासः चातुर्मास्यानि चान्यान्यपि वेदविहितानि कर्माणि बाल्ये यौवने च विहितानां दुष्कर्मणां विनाशाय कर्त्तव्यानि ।

चतुर्थाश्रमे संन्यासग्रहणं कार्यम् । तस्मिन् संन्यासे निखिलानां कर्मणां न्यासः कार्यः । द्रव्यस्पर्शश्च न विधेयः । अग्निस्पर्शः परिहर्तव्यः ।

नारीणामवलोकनं तासां मध्ये निवसनं पूर्वदृष्टनारिस्मरणं च न विधेयम् । चतुर्षु वर्गेषु पञ्चसु गृहेषु च भिक्षां विधाय जलाशये गत्वा भिक्षान्नं जलेनाभिषिच्य भोक्तव्यम् । ज्ञानोपार्जनं विधेयम्, यतो हि व्याकरणे कारकप्रकरणे प्रतिपादितं — ऋते ज्ञानान्न मुक्तिः ।

द्वादशस्कन्धे तृतीयेऽध्याये सम्प्राप्ते कलियुगे घोरे बहवो दुष्टाः लम्पटाः वेदनिन्दकाः क्रूरकर्मपरायणाः जनाः भविष्यन्ति, तेषां सर्वेषां पापनिरासाय भगवता व्यासेन हरेः कीर्तनं पुरुषोत्तमाराधनं कलिमलापहं प्रोक्तम्, यथा —

**कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।**
**कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥**
**कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।**
**द्वापरे परिचर्यायां कलौ तद्धरि कीर्तनात् ॥**

इति कर्मकाण्डान्तर्गतं हरिकीर्तनं द्वादशे स्कन्धे तृतीयेऽध्याये सुवर्णितम् ।

**गारुडपुराणोक्तः कर्मकाण्डः**

तदनन्तरमेव वैष्णवानामपि विष्णुनारायण एव सूर्यरूपेण उपास्य-देवः प्रशस्तः । अत एवाध्यायेऽस्मिन् गरुडपुराणीयविषयः

सूर्योपासनारूपः सविधि सङ्क्षेपतः दर्शितः । तत्र सूर्योपासनया फलादेशः प्रधानतया वर्णितः । फलस्वरूपतयैव श्रद्धा ऋद्धिकला-मेधातुष्टिप्रभृतीनां लाभो वैष्णवैरपि क्रियते तस्मादेव गरुडपुराणे यज्ञयागादौ औध्र्वदैहिकक्रियायां श्राद्धविधौ च विशेषतः कर्मकाण्ड-विषयता स्मार्तापेक्षया महत्त्वं भजति, अत्र गरुडपुराणे प्रेतकल्पः प्रेतानामुद्धाराय महत्त्वपूर्णोऽशः सविधिमहत्त्वं प्रतिपादनपुरस्सरं दृष्टिपथायते ।

एतस्य गरुडपुराणस्य न ा म भागवतपुराणानुसारं सौपर्णमिति-त्यप्युच्यते ।

एतस्य पुराणस्य महिमा - उक्तदृष्ट्या जीवानामुद्धारो विशेषतः वर्णितः ।

सप्तमेऽध्याये श्रीसूर्यनारायणादीनां पूजनादिविषये श्रीरुद्रेण पृष्टो हरिः । हरिणा भुक्तिमुक्तिप्रदं सूर्यनारायणादिपूजनं प्रतिपादितम् । यथा सूर्याय नमः[1] सूर्यमूत्तर्ये नमः, ॐ ह्रां ह्रीं सः सूर्याय नमः । ओं सोमाय नमः ओं भौमाय नमः । बुधाय नमः इत्यादिना प्रकारेण सर्वेषां ग्रहाणां तथा च शिवगौरीवामदेवेन्द्रचण्ड-वासुदेवसङ्कर्षणप्रद्युम्नविष्णुनरसिंहवराहवैनतेयसुदर्शनपाञ्चजन्यश्री-वंत्सकौस्तुभादीनां पूजनं सुवर्णितम् । अनेन पूजनेन श्रद्धा[2] ऋद्धिः कला मेधा तुष्टिः पुष्टिः प्रभामतीः मानवी विन्दति । अष्टमेऽध्याये भगवतो विष्णुपूजा सुष्ठुप्रकारेण वर्गिता । तत्र पूर्वं पञ्चरङ्गिकचूर्णेन मण्डलं विलिख्य विष्णोः पूजनं कर्तव्यमिति वर्णितम् ।

नवमेऽध्याये दीक्षितेन शिष्येन विधात्तव्यः ।

---

1. सप्तमेऽध्याये - सूर्यादिपूजां प्रवक्ष्यामि धर्म्मकामादिकारिकाम् ।
2. श्रद्धा ऋद्धिः कला मेधा तुष्टिः पुष्टिः प्रभामतीः ।

दशमेऽध्याये भगवत्याः आदिदेव्याः महालक्ष्म्याः तथा च सरस्वत्या वाग्देव्याः पूजनमुक्तम् । यथा, ओं महालक्ष्म्यै नमः । श्रां श्रीं श्रौं श्रः क्रमाद् हृदयञ्च शिरःशिखाकवचम् । नेत्रमन्त्रन्यासनं मूर्तिमर्चयेत् । एकादशेऽध्याये नवव्यूहार्चनं लिखितम्[1] ।

द्वादशेऽध्याये भगवतो विष्णोः पूजाप्रकारो वर्णितः । यथा — ओं अनन्ताय नमः । ओं धर्मराजाय नमः, (षोडशेऽध्याये), आनन्द-कन्दपरमान्दभगवतो[2] विष्णोर्ध्यानं वर्णितम् । तदनन्तरं अंशुमालिनः (सूर्यस्य) पूजाविधानमुक्तम् । तथा अन्येषां ग्रहाणां पूजनं लिखितम् । अनुरुकाय नमः । प्रथमनाथाय नमः ।

[3]सप्तदशेऽध्याये पुनः गभस्तिमालिनः सूर्यनारायणस्य पूजा-विधानं पूजनं अर्चनञ्च सुमनोहरैः शब्दैः समुट्टङ्कितम् । अष्ट-दलादिकं विलिख्य तस्मिन् दिशादिक्रमेणार्चनमुक्तम् । अष्टा-दशेऽध्याये मृत्युञ्जयस्य भगवतः शिवस्यार्चनं गरुत्मता[4] काश्यपाय पूजाविधानं पूजनं च कथितम् । मन्त्रोऽपि प्रदर्शितः ऊँ जूं सः सूर्याय नमः ।

एकविंशतितमेऽध्याये[5] श्रीपञ्चवक्त्रार्चनं विस्तारेण सुवर्णितम् । द्वाविंशतितमेऽध्याये पुनः शिवार्चनं मन्त्रदीक्षा वर्णिता ।

त्रयोविंशतितमेऽध्याये पुनः शिवार्चनं धर्मकामादिसाधकं पूजनमुक्तम् । यथा — ऊं ह्रां ह्रीं ह्रूँ ह्रौं ह्रः शिवसूर्याय नमः इत्यादि-चतुर्विंशतितमेऽध्याये गणेशार्चनप्रकारः भुक्तिमुक्तिप्रसाधकः

---

1. नमस्ते पुण्डरीकाक्षः नमस्ते विश्वभावन सुव्रत नमस्तेऽस्तु महापुरुषपूर्वज ।
2. शृणु रुद्रहरेर्ध्यानं संसारतरुनाशनम् - इत्यादि ।
3. पुनः सूर्यार्चनं वक्ष्ये यदुक्तं धनदाय हि अष्टपत्रं लिखेत् पद्मं शुचौ देशे सकर्णिकम् ।
4. मात्रा मुद्रा जपं ध्यानं दक्षिणाञ्चाहुतिः स्तुतिः इत्यादि ।
5. पञ्चवक्त्रार्चनं वक्ष्ये पृथग्यद्भुक्तिमुक्तिदम् । इत्यादि ।

पूजाप्रकारो वर्णितः । पञ्चविंशतितमेऽध्यायेऽऽसनपूजनप्रकारः सुव्याख्यातः ।

अष्टाविंशतितमेऽध्याये भगवतो गोपालस्य श्रीकृष्णस्य परमानन्दस्य भुक्तिदो मुक्तिदश्च पूजनप्रकारः सविस्तरः सुवर्णितः ।

एकोनत्रिंशत्तमेऽध्याये मोहिनीपूजनं सर्वकष्टहरं वर्णितम् । यथा श्रीधराय त्रैलोक्यमोहनाय नमः — इत्यादि । त्रिंशत्तमेऽध्याये श्रीधरस्यार्चनं भणितम् । एकत्रिंशत्तमेऽध्याये श्रीविष्णुपूजनं स्तोत्रं सुव्याख्यातम् । [1]द्वात्रिंशत्तमेऽध्याये पञ्चतत्त्वपूजनं वर्णितम् । त्रयस्त्रिंशत्तमेऽध्याये सुदर्शनस्य पूजनं विहितम् । यथा सुदर्शनस्य पूजा मे वद शङ्खचक्रगदाधर । चतुस्त्रिंशत्तमेऽध्याये हयग्रीवपूजाविधानं वर्णितम् ।

[2]षड्त्रिंशत्तमेऽध्याये सन्ध्याविधिः तत्फलञ्च वर्णितम् । सप्तत्रिंशत्तमेऽध्याये [3]गायत्रीमन्त्रस्य विधिः फलञ्च वर्णितम् । अष्टत्रिंशेऽध्याये दुर्गापूजनं सुष्ठुरूपेण वर्णितम्[4] ।

एकोनचत्वारिंशदध्याये सूर्यपूजनमाराधनं सम्यक्तया समुट्टङ्कितम् । चत्वारिंशदध्याये माहेश्वरीपूजनं विधानं लिखितम् । एकचत्वारिंशदध्याये मरणादिविधानं मरणकाले पूजाविधानं सुचारुरूपेण वर्णितम् ।

द्विचत्वारिंशदध्याये[5] हरस्योपरि पवित्रारोहणम् । त्रिचत्वारिंशे पवित्रारोहणं शिवस्योपरि वर्णितम् ।

---

1. पञ्चतत्त्वार्चनं ब्रूहि शङ्खचक्रगदाधर इत्यादि ।
2. सन्ध्याविधिः प्रवक्ष्यामि शृणु रुद्राघनाशनमित्यादि ।
3. गायत्री परमा देवी भुक्तिमुक्तिप्रदा च ताम् । यो जपेत् तस्य पापानि विनश्यन्ति महान्त्यपि ।
4. नवम्यादौ यजेद् दुर्गां ह्रीं दुर्गे रक्षिणीति चेत्यादि ।
5. वास्तु सङ्क्षेपतो वक्ष्ये गृहादौ विघ्ननाशनम् ।

षट्चत्वारिंशेऽध्याये वास्तुपूजनं तत्फलञ्च सुव्याख्यातम् । गृहनिर्माणसमये अर्थात् शिलान्याससमये वास्तुपूजनं तत्प्रकारः, तथा च तत्फलं च सम्यग्रूपेण प्रदर्शितम् । कस्यां कस्यां काष्ठायां द्वारं स्थापनीयम्, तस्यापि [1]सप्तविंशेऽध्याये मृत्योरनन्तरं सोदकास्तिलजल-मधुपयोमिश्रिताः घटा दीयन्ते तेषां संख्याः अपि सुप्रतिपादिताः । बर्द्धनीदानं सम्यग्रीत्या प्रदर्शितम् ।

[2]अष्टाविंशेऽध्याये कर्मकाण्डान्तर्गते कृष्णनाममाहात्म्यं तुलसी-[3] माहात्म्यञ्च सम्यक्तया विस्ताररूपेण सुवर्णितम् । कन्यादान-माहात्म्यं वापी[4]कूपतडागादिदानमाहात्म्यं सम्यक्तया विस्ताररूपेण वर्णितम् ।

ऊनत्रिंशेऽध्याये कर्मकाण्डान्तर्गतानां सूतकानां वर्णनं विहितम् ।

त्रिंशेऽध्यायेऽपमृत्युविनाशाय नारायणबल्याः सम्यक्तया विस्तृतं वर्णनं कृतम् ।

द्वात्रिंऽध्याये विविधानि यानि श्राद्धानि, तेषां वर्णनं कृतम् । त्रयस्त्रिंशेऽध्याये नित्यश्राद्धानां विषये विस्तरेण वर्णनं कृतम् ।

पञ्चत्रिंशेऽध्याये कर्मकाण्डान्तर्गतायाः वैतरणीनद्याः प्रमाणं दुरवगाहत्वं तन्माहात्म्यं विविधपापकथनं तन्निराकरणं विष्णु-स्मरणञ्च सर्वकल्मषकदम्बप्रणाशकं तत्फलं सम्यग् रीत्याऽऽनन्दकन्देन भगवता गरुडाय सुप्रतिपादितं सुव्याख्यातं वा । सम्यक्तया गुणदोषयोर्विवरणं कृतम् ।

---

1. मानुषस्य शरीरे तु – अस्थ्नामेव सञ्चयः । संख्यातः सर्वदेहेषु षष्ट्यधिक-शतत्रयम् । उदकुम्भेन पुष्टानि तान्यस्थीनि भवन्ति हि इत्यादि ।
2. **कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ।**
   **जलं भित्वा यथा पदं नरकादुद्धराम्यहम् ॥**
3. तुलसी दहते पापं नृणां जन्मार्जितं खग ।
4. दशकूपसमा वापी दशवापी समं सरः । दशानां सरसां साम्यं प्रपाताक्ष्र्य निर्जले ॥

अष्टचत्वारिंशेऽध्याये सर्वेषां देवानां प्रतिष्ठा वेदिनिर्माणप्रकारः चतुर्णां द्वाराणां दिशाक्रमेण मृगेन्द्रादिसंज्ञा च सुष्ठु प्रकारेण वर्णिता । बहुविधानि तेषां फलान्यपि शुभाशुभानि प्रतिपादितानि । पञ्चाशदध्याये नित्यक्रिया शौचादिव्यवस्था स्नानादिकं तद् विधिश्च सुवर्णिता । एकपञ्चाशदध्याये दानधर्मादिकं सुपात्रे दानं देयं प्रायश्चित्तविधिश्च सुप्रतिपादिता ।

द्विपञ्चाशत्तमेऽध्याये ब्रह्महासुरापस्तेऽपि गुरुतल्पगानां प्रायश्चित्तं विनिर्दिष्टम् ।

एकाशीतितमेऽध्याये सर्वेषां तीर्थानां माहात्म्यं तेषु स्नानादेः पुण्यञ्च प्रतिपादितम् । पञ्चाशीतितमेऽध्याये गयायां पिण्डदानं तत्र स्नानं च वर्णितम् ।

षडशीतितमेऽध्याये[1] गयायां स्नानं प्रेतशिलायां पिण्डदानं तत् फलञ्च सुप्रतिपादितम् ।

अष्टनवतितमेऽध्याये दानधर्मयोः फलं सुव्याख्यातम् । नव-नवतितमेऽध्याये कदा कुत्र केन कथं श्राद्धं कार्यं तत् प्रकारश्च सुष्ठुतया प्रतिपादितः । करणाकरणे पुण्यपापावपि प्रदर्शितः । एका-धिकशततमेऽध्याये ग्रहयागफलप्रकाराः प्रदर्शिताः अर्थाद् ग्रहाणां पूजनापूजने शान्तिरशान्तिश्च दर्शिता ।

[2]पञ्चाधिकशततमेऽध्याये विहितस्य कार्यस्याननुष्ठादविहितस्य कर्मणः सेवनात् पतनमृच्छति नरः । इत्यादेः प्रायश्चित्तं विनिर्दिष्टम् । षडधिकशततमेऽध्याये प्रेतशौचव्यवस्था प्रदर्शिता । यथा वर्षद्वयादूनं निखनेत् अर्थाद् भूमौ स्थापयेदुदकं दानं न कुर्यात् । वर्षद्वयादुपरि मृतस्य बालस्य बालिकायाश्च दाहः कार्यः । षोडशाधिक-शततमोऽध्यायतः सप्तत्रिंशाधिकशताध्यायं यावत्तिथ्यादिव्रतानां विधानमुक्तम् । तथा फलमपि उल्लिखितम् । षडाधिकद्विशताधि-

---

1. येयं प्रेतशिला ख्याता सा त्रिधा स्थिता । प्रभासे प्रेतकुण्डे च गयासुर-शिरस्यपि, इत्यादि ।
2. अवीचीं कुम्भपाकञ्च यान्ति ब्रह्महत्यासमे ह्युभे । निषिद्धभक्षणं जिह्वा-क्रियाचरणमेव च ।

कांध्यायतः द्वादशाधिकद्विशताध्यायान्तं यावत् स्नानविधिः तर्पण-विधिः वैश्वदेवहोमविधानं सन्ध्याविधिः श्राद्धविधानं नित्यश्राद्धविधिः सपिण्डीकरणञ्च सुप्रतिपादितम् ।

## गरुडमहापुराणस्योत्तरार्धम्

### प्रेतकल्पात्मककर्मकाण्डविमर्शः

तृतीयोऽध्याये कर्मकाण्डान्तर्गतं दानं तत्फलं प्रतिपादितम् । चतुर्थेऽध्याये मरणानन्तरं या क्रिया भवति, तस्याः और्ध्वदेहक्रिया - इति संज्ञा ऋषिभिः परिकीर्तिता, तस्या वर्णनं वृषोत्सर्गस्य च सम्यक्तया विहितम् ! कस्मिन् कस्मिन् समये कीदृशं दानं करणीयमित्यपि सुप्रतिपादितम् । पञ्चमेऽध्याये और्ध्वदेहिककर्मणां तथा च मारणानन्तरं याः संस्कारो भवति तस्यापि वर्णनं कृतम् ।

चतुर्दशेऽध्याये मरणानन्तरं बन्धुवर्गकृते याऽशोभवते तस्य सुष्ठुतया वर्णनं कृतम् । तथा प्रेतकृत्यञ्च सुप्रतिपादितम् ।

पञ्चदशेऽध्याये सपिण्डकरणस्य विषये तथा श्राद्धविषये विशद-रूपेण वर्णनं कृतम् । श्राद्धस्य माहात्म्यमपि समुट्टङ्कितम् ।

अष्टादशेऽध्याये प्रेतत्वमुक्तिहेतवे उदकघटादिदानं सुप्रति-पादितम् ।

चतुर्विंशेऽध्याये पुनः मृत्योरनन्तरं क्रियाया प्रतिपादनं उक्तम् ।

पञ्चविंशेऽध्याये प्रेतत्वमुक्तये कियन्ति श्राद्धानि कदा कदा[1] कुत्र कार्याणि, येन मृतस्य जन्तोर्मुक्तिर्भवति, एतदपि प्रतिपादितम् ।

[2]षड्विंशेऽध्याये कर्मकाण्डान्तर्गतं तीर्थमाहात्म्य[3]मनशनव्रत-माहात्म्यं विविधानि दानानि च तेषां दाने मुक्तिदानेऽगतिर्भवति । तद्विषये विस्तारतया साधु प्रतिपादितम् ।

---

1. त्रयः पिण्डभुजो ज्ञेयास्त्याजकाश्च त्रयं स्मृताः ।
   त्रयः पिण्डानुलेपाश्च दशमः पङ्क्तिसन्निधौ ॥
2. कृत्वा निरशनं यो वै मृत्युमाप्नोति कोऽपि चेत् । मानुषो तनुमृत्सृज्य मया (भगवत्तुलः) तुल्यः विराजते ।
3. तीर्थसेवी सदा यस्तु सर्वकिल्विषनाशनम् - इत्यादि ।

**पद्मपुराणोक्तः कर्मकाण्डः**

गरुडपुराणोक्तकर्मकाण्डवर्णनानन्तरं वैष्णवानां पञ्चसंस्कार-दीक्षादिविधिपुरस्सरं समुद्धाराय भगवतो महेश्वरः पार्वतीं प्रतित्युप-देशात्मनः महत्त्वाधिक्यं प्रमाणयति । यतोऽत्र वैष्वानां यथा शम्भु - इति भगवतो विष्णोर्वचनानुसारं एवाधिकृत्य सृष्टिक्रमे भागवतो विष्णोः नाभिकमलात् जायमानं ब्रह्माणं लोकपितामहं जगत्सर्जन-कर्तारमभिलक्ष्य जगत्सु च जन्मग्रहणतां जीवनां मोक्षोपायः कः ? कथं च इत्यादि जिज्ञासितविषये बहुनि विस्तृतानि - उपख्यानानि कर्मकाण्डसम्बन्धीनि वर्णितानि लभ्यन्ते ।

तत्रापि च व्रतोपवासादीनां विधिविधानपुरस्सरं निरूपणम्, तदनन्तरं जीवानां वैष्णवत्वस्वरूपविषयकविविधानि महत्त्वपूर्ण-वचनानि भगवतो महेश्वरस्य पार्वतीं प्रति प्रोक्तानि कर्मकाण्ड-विषयस्य महन्महत्त्वं प्रमाणयन्ति ।

प्रायोऽस्मिन् पद्मपुराणे मुमुक्षूणां प्राणिनां महोपंकारतया वैष्णव-सिद्धान्ताः प्रतिपादिताः ।

पाञ्चरात्रागमानुमोदिताः कर्मकाण्डविषयाः वैशिष्ट्यं भजन्ति ।

वस्तुतः इदमेव (पुराणं) पद्मपुराणं वैष्णवकर्मकाण्डविषये सर्वातिशायि दृश्यते ।

अतोऽस्मिन् - उपासनाकाण्डज्ञानकाण्डद्वयस्य प्रथमसोपानतया कर्मकाण्डविषयाः निर्धारिताः ।

कपिलातीर्थे सूर्यतीर्थे गङ्गातीर्थे कन्यातीर्थे (कोन्यास्तीर्थे) कन्या-तीर्थे वा मातृतीर्थे केदारतीर्थे वेदतीर्थे च श्राद्धेन पितृतर्पणेन देव-होमेन, पूजनेन, स्नानेन चाश्वमेधादियज्ञानां फलं मुक्तिं च लभते ।

सप्तविंशेऽध्याये बहुनां तीर्थानां महिमा वर्णितः । अष्टाविंशेऽध्याये धर्मतीर्थादीनां वर्णनं विहितम् । धर्मतीर्थमतीव पुरातनं वर्तते यत्र

तपस्तप्तं तथा च किञ्चित्पुण्यं कर्मकृतं केवलं स्नानमपि कृतम् । आसप्तकुलं तस्य स्नानदानपुण्यादिकर्तुः पवित्रं भवति । मानवः स्नानेन दानेन तपसा च वाजपेयसमं पुण्यमधिगच्छति । मरणानन्तरं विष्णुलोकं सङ्गच्छति । सौगन्धिकं वनं वर्तते, यत्र ब्रह्मादयो देवाः ऋषयः सिद्धचारणकिन्नरादयः तत्र विहरन्ति, तत्रापि स्नानस्य दानस्य निवासस्य च महत्पुण्यं वर्णितम् । प्लक्षानाम्नी नदी वर्तते तत्रैव या वल्मीकान्निसृतं तज्जलं सर्वपापक्षयकरं यत्र देवानां पितृणां च पूजनेन वाजपेयसमं फलं लभते नरः । ईशोनानम्नि तीर्थस्नानेन होमेन दानेन च वल्मीकाद् - षड्गुणपुण्यं लभते नरः ।

सहस्रसंख्यकानां दानेन यत्पुण्यं भवति । वाजपेयशतस्य च यत् सुकृतं लभते तद्वत्फलं मानवो विन्दति ।

त्रिशूलपाते तीर्थेऽभिषेकेण स्नानेन वा देवानामर्चनेन पितृणां श्राद्धकरणेन तर्पणेन च देहावसाने गाणपत्यपदं लभते[1] ।

**अथ पद्मपुराणान्तर्गतस्नानदानादिकर्मकाण्डः**

पुष्कराख्ये तीर्थे स्नानेन कल्मषकदम्बध्वंसो भवति यत्फलं प्रभूतैः यज्ञैः काञ्चनदानैर्धेनुदानैश्च मानवो विन्दति । तेभ्योऽधिकं पुण्यमस्मिन् स्नानेन दरीद्रोऽपि नरो लभते समीहितां सिद्धिञ्च प्राप्नोति इति एकादशे वर्णितम् । द्वादशाध्याये नर्मदायां श्राद्धकरणेन देवार्चनेन गोदानेन द्विजपूजनेन पञ्चषट्निशानिवासेन हयमेधसमं पुण्यं गोसहस्रफलञ्च यत् तत्फलं स्नानमात्रेण मानवो लभते ।

चतुर्दशेऽध्याये नर्मदायां स्नानेन निवासेन च मुक्तपापो नरो भवति । ब्रह्महत्यामपि तूर्णं तरति मानवः । यो तस्यां तिलधेनुदानरूपं कर्म करोति, ससागरायाः नवद्वीपायाः पृथिव्याः प्रदानेन फलमधिगच्छति ।

---

1. गाणपत्यं च लभते देहं त्यक्त्वा न संशयः ।

षोडशेऽध्याये नर्मदाकावेरिसङ्गमस्नानमभिषेककर्म करोति, स सर्वपापमुक्तो भवति, कुवेरवत् फलं लभते । कुवेरोऽपि – अस्मिन् सङ्गमे स्नानं विधाय महादेवाद् यक्षादिपपदं लब्धवान् । यतो हि इयं शङ्करदेहाद् विनिःसृता । अतोऽस्यां स्नानमात्रेण शङ्करो याति प्रसन्नताम् ।

सप्तदशेऽध्यायेऽपि अस्यां स्नानेन तथा चास्याः स्तवनेन च महत्तमं माहात्म्यं समुट्टङ्कितम् । [1]यः एनं केवलं स्तौति सोऽपि मनोवाञ्छितं फलमधिगच्छति[2] ।

अष्टादशाध्यायादारभ्य विंशतिरध्यायान्तं स्नानस्य दानस्यान्य-शुभकर्मणो महत्पुण्यं वर्णितं निखिलानां दुष्कर्मणां भेदनं शोधनं च भवति ।

एकविंशतमेऽध्याये नर्मदेश्वरस्य तीर्थस्य माहात्म्यं वर्णितम् । तस्मिन् यः स्नाति तस्य त्रिविध पापात् – कायिकवाचिकमानसिक – पापत्रयात्तूर्णं मुक्तिर्भवति । तत्र च यो भक्त्या स्वपितृणां कृते पिण्डं ददाति, तिलदर्भमिश्रितमुदकं वितरति । तत् तीर्थराजप्रभावेनाक्षयं याति । प्रदाता निष्कल्मषो भूत्वा मरणानन्तरं ब्रह्मलोकं प्रयाति । यः केवलं स्नाति स शिवलोकं प्रयाति ।

द्वाविंशतितमेऽध्याये नर्मदेश्वरस्य जलकणस्पर्शकर्ममात्रेण पिशाचयोनिर्विनश्यतीति वर्णितम् । त्रयोविंशत्यध्याये रेवाजल-कणस्पर्शमात्रेण तद्दर्शने च कासांचिद् गन्धर्वकन्यकानां शापकर्म विनष्टम् । दुर्गतिगतानां मातृपितृभातृणां श्राद्धादितो मुक्तिर्भवति[3] ।

चतुर्विंशत्याध्याये नर्मदादिभ्यो निखिलतीर्थेभ्योऽधिकश्रेष्ठतमा निखिलपापध्वंसिनी, पिशाचयोनिमोचनी, गर्भवेदनाप्रणाशिनी

---

1. (महादेव चिमगजी आप्टे इत्यनेन पुण्याख्या पत्तने आनन्दाश्रम मुद्रणा लयेऽस्य मुद्रणमभूत् ।)
2. नमोऽस्तु ते धर्मभृते वरानने, नमोस्तु ते सर्वजगत्सुपूजिते ।
   नमोऽस्तु ते सर्वपवित्रपावने, नमोऽस्तु ते सर्वजगत्सुपूजिते ॥
3. गायन्ति देवाः सततं निविष्टा रेवा कदा मज्जनदा नो भवेत् ।
   स्नाता नरा यत्र न गर्भवेदनां पश्यन्ति तिष्ठन्ति च विष्णुसन्निधौ ॥

अर्थाज्जन्ममरणापहारिणी, परमपदप्रदायिनी चेति वर्णितम् । अतोऽस्याः देवैः स्तुतिर्विहिता ।

पञ्चविंशत्यध्याये वितस्तायाः देविकायाश्च महिमा सम्यक् प्रकारेण समुट्टङ्किता, यथा - यो नरो वितस्तायां स्नात्वा स्वपितृणां श्राद्धं तर्पणं च विदधाति, स वाजपेयसमं पुण्यमधिगच्छति । तेषां कृते यत् किञ्चित् स्वशक्त्या वितरति तदक्षयं भवति अस्यां यः सन्ध्यां करोति सोऽपि मुक्तिं प्रयाति सर्वपापाद् विनिर्मुक्तो भवति[1] । पितृनुद्दिश्य यद् वितरति तदक्षयं भवति । कर्ता च गवां शतसहस्रस्य राजसूयशतस्य अश्वमेधसहस्रस्य फलं विन्दति । अस्यां एकरात्र-निवासेनापि अग्निष्टोमफलं प्राप्नोति मानवः ।

देविकायामपि श्राद्धकरणेन शिवपूजनेन देवमुद्दिश्य होमेन स्नान-सन्ध्यादिना पितृणां देवानाञ्च सतिलपयोयवसदर्भतर्पणेन च महादेवः प्रसीदति । यतो हीदं स्थाणुस्थानं वर्तते[2] ।

अत्रापि राजसूयाश्वमेधवाजपेययज्ञानां फलं स्नानदानादिना मानवो लभते । षडविंशेऽध्याये कुरुक्षेत्रादितीर्थानां वर्णनं रामह्रद-माहात्म्यं वर्णनं वंशमूलकायशोधतीर्थादिनां च महिम्नो वर्णनं विहितम् ।

कुरुक्षेत्रे श्राद्धतर्पणहोमजपदानैश्च मनुष्यः महत्तमं पुण्यं लभते । यः स्नानस्य दानस्य च कामनां करोति सोऽपि पापात् प्रमुच्यते । श्राद्धादिविधातृणान्तु का कथा । रामह्रदे श्रीपरशुरामेण स्वपितॄणां प्रीतये श्राद्धादिकं कृतं तर्पणं विहितं विधिविधानतः तदा ते प्रसन्नाः जाताः । तेषां क्षत्रियहननरूपं महत्पापं विनष्टम्[3] ।

---

1. काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च, वितस्ताख्यमिति ख्यातं सर्वपाप-प्रमोचनम् ।
2. त्रिशूलपाणेः स्थानं च यत्र त्रिषु लोकेषु विश्रुतम् ।
   देविकायाः नरः स्नात्वा अभ्यर्च्य च महेश्वरम् ॥
3. तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ।

वंशमूले तीर्थे स्नानदानश्राद्धादिभिः क्रियाकलापैः मनुष्यस्य वंशस्समुद्धारः कायशोधश्च भवति । शाकम्भरीनामकं तीर्थं वर्तते यत्र भगवत्याः दिव्यवर्षसहस्रं यावत् शाकभोजनं तत्परीक्षार्थं देवाः समागताः ऋषयोऽपि समाजग्मुः तेषां सर्वेषां शाकेनैवातिथ्यं विहितं तस्मात् तद्दिनतः तन्नाम शाकम्भरीति जातम् ।

तत्र च शाकभक्षणस्य महत्पुण्यं पद्मपुराणे वर्णितम् । त्रिरात्रशाकाहारेण द्वादशवर्षस्य शाकाहारफलं लभते । निखिलानि जन्मन्तरार्जितानि दुष्कृतानि विनाशमुपयान्ति ।

सुवर्णाख्यं तीर्थमपि सर्वपापक्षयकरम् । तत्र देवार्चनस्य अत्युत्तमं पुण्यं प्रतिपादितम् । विष्णुनापि हरतीर्थं हरस्याराधनमर्चनं कृतं प्रसन्नेन शिवेन बहुविधाः वराः विष्णवे प्रदत्ताः । यत्फलं देवैरपि सुदुर्लभम् । महापरिक्रमणस्यापि महत्फलमस्ति । धाराभिधेयं तीर्थं वर्तते, यत्र स्नानस्य महत् पुण्यं, स्नात्वा नरः शोकाद्विनिर्मुक्तो भवति । गङ्गाद्वारं तीर्थमस्ति यत्रैकरजनीनिवासेन गोसहस्रदानसमं पुण्यमधिगच्छति । सप्तगङ्गे त्रिगङ्गे शक्रावर्ते च यत्तर्पणं जपं होमादिना पुण्यं विन्दति नरः । तत्पुण्यमेकरात्रिनिवासेन सुकृतं पुरुषः प्राप्नोति ।

कनखलाख्यं यत्तीर्थं, तत्रापि स्नानदानादिंना निवासेनाश्वमेधफलं स्वर्गञ्च प्राप्नोति[1] । तत्रैव एकं नागतीर्थं वर्तते तत्तीर्थं त्रिलोकविश्रुतं तत्र होमस्य दानस्य स्नानस्याक्षयं फलम्, सर्वदुष्कर्मनाशकं निवासेनापि गोसहस्रदानफलमधिगच्छति[2] ।

---

यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥
ततश्च पापान्मुक्तस्त्वं विहतास्ते स्वकर्मणा ।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥

1. ततः कनखले स्नात्वा त्रिरात्रपोषितो नरः ।
अश्वमेधगवाप्नोति स्वर्गलोकं च गच्छति ॥
2. तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप । कपिलानां सहस्रं फलं प्राप्नोति मानवः ॥

एकोनत्रिंशेऽध्याये कालिन्दीमाहात्म्यवर्णनं विहितम् । कालिन्दी-तीर्थं सर्वतीर्थेभ्य श्रेष्ठतममुक्तमत्र स्नानमात्रेणापि निखिलाऽनेक-जन्मार्जिता दुर्गतिः पापौघश्च विनाशमेति दानस्य, देवार्चनस्य पितृ-श्राद्धस्य च तु का वार्ता । कुरुक्षेत्रे ब्रह्मवर्तादिषु तीर्थेषु च यल्लभते फलं तत्फलं यमुनायामनायासेन ना लभते[1] ।

यमुनायां दानेन स्नानेन च आयुर्वर्धते सम्पत्तिश्चाभिवर्धते । ये नरकाद् बिभ्यति तेऽस्यां निमज्जनं कुर्युः । दारिद्र्यदौर्भाग्यपापपङ्क-प्रक्षालनी कालिन्दी एव नान्या काचित् । अस्यां स्नानेन चन्द्रवत् पक्षद्वयपापं क्षीयते । अर्थात् – कृष्णे दले चन्द्रो ह्रासमेति शुक्ले वृद्धिं प्रयाति, एवं पापानि क्षीयन्ते, पुण्यं वृद्धिमेति च । कृतयुगे तपःपरः ज्ञानमासीत् । त्रेतायुगे यजनं सर्वफलदायकम्, द्वापरे कलौ च दान-प्रदानं सर्वदायकम् । परं कालिन्द्यां स्नानं सर्वदा फलदायकं वर्तते ।

यमुनायां मज्जनेन पातकानि उपपातकानि भस्मीभवन्ति । अस्यां[2] स्नानेन आर्द्रं शुष्कं लघु स्थूलं पापं विनश्यति । यमुनायां स्नानेन निखिलानि जन्मजन्मान्तरार्जितानि दुष्कर्मादीनि विनाशं यान्ति, सुकर्मादीनि च वृद्धिं यान्ति । कोटितीर्थादिषु दानस्नानादिना महतायासेन यत्फलं लभते तत्केवलं यमुनायां मज्जनमात्रेण ।

अथ एकत्रिंशेऽध्यायेऽस्मिन् कश्चिद् विकुण्डलनामा वैश्यपुत्रः आसीत् । स धर्मराजाज्ञया स्वर्गदूतैः नीतस्तदा विस्मयान्वितः तान् अपृच्छत्, किं कारणं स्वर्गप्राप्तेः मया नानाविधानि दुश्चरितानि

---

1. पुष्करे कुरुक्षेत्रे ब्रह्मवर्ते पृथूदके । अविमुक्ते सुवर्णाख्ये यत्फलं नो लभेन्नरः । तत्फलं समवाप्नोति यमुनायां नरोत्तम । स्वर्गभोगेऽतिरागी वै यैषां मनसि वर्तते ।
2. आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्मभिः कृतम् । तत्र स्नानं देहत् पापं



पावकः समिधौ यथा ।

आचरितानि । दूत उवाच - हरिमित्रसुतेन वेदपारगेन तव सख्यमासीत् । तत्सङ्गेन त्वया माघे मासे कालिन्दीपुण्यपानीये स्नानं विहितम् । येनैहिकामुष्मिककल्मषकदम्बो भस्मीभूतः । त्वं च स्वर्गं प्राप्तः । अन्यान्यपि कर्माणि सन्ति, यैः स्वर्गप्राप्तिः प्रजायते । यथा - यो ब्रह्मचारी गृहस्थः वानप्रस्थो यतिश्च वा यदि स स्वधर्मनिरतः स्वर्गं गच्छति वै ध्रुवम् । यथा तिलानां तिलपात्राणां भूमेः काञ्चनस्य गोश्च दाता स्यात् । सोऽपि यामीं यातनां न याति वै । अर्थात् स्वर्गं गच्छन्ति ते नराः । व्रतदानतपोयज्ञरताः गङ्गां स्नाताः स्नानकाले गङ्गा गङ्गेति [1]भाषणपराः हतकिल्विषाः भवन्ति ।

ये[2] द्वादशाक्षरं जपन्ति । तेऽपि स्वर्गं व्रजन्ति । शालिग्रामशिलापूजकाः शालिग्रामशिलानिकटे श्राद्धकर्तारः यज्ञदानहोमविधातारः शिलाग्रामतोयपानरताश्च ते सर्वे वैकुण्ठं प्रयान्ति च शालिग्रामशिलासमीपे ये निजप्राणान् त्यजन्ति तेऽपि स्वर्गं व्रजन्ति ।

ये एकादश्युपवासस्य कर्तारः तेऽपि यामीं पुरीं नैव प्रयान्ति । हरिदिनोपवासस: गङ्गायमुनागयाकाशीपुष्करादिभ्यः सर्वेभ्यः[3] श्रेष्ठतमः स्मृतः तत् करणेन नरो नाकं प्रयाति ।

य एकादशीमुपोष्य हेमतिलान् गाश्च प्रयच्छन्ति । उपवासदिने जागरणं विद्धत्ते । तीर्थमज्जनञ्च कुर्वन्ति ते स्वर्गलोकं प्रयान्ति ।

सप्तविंशेऽध्याये कन्यातीर्थस्य माहात्म्यं वर्णितम् । तत्र स्नानेनाग्निष्टोमयज्ञस्य फलमाप्नोति मानवः । सोमतीर्थे स्नानेन सोम-

---

1. गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि ।
नरो न नरकं याति किं तया सदृशं भवेत् ॥
2. ॐ नमो भगवते वासुदेवाय ।
3. गङ्गा न गया वैश्य काशी न च पुष्करम् । न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन तु । यमुना चन्द्रभागा च न तुल्या हरिदिनेन तु ॥

लोकस्य प्राप्तिर्भवति । सप्तसारस्वततीर्थे स्नानात् - दानाच्च भगवत्-प्राप्तिः सर्वसमीहितसिद्धिर्भवति ।

कपालमोचने स्नानन्निखिलानि पापानि विलयं यान्ति । अग्नितीर्थे स्नानादग्निलोकस्य प्राप्तिः । ब्रह्मयोनिञ्च विन्दति नरः ।

कुरुक्षेत्रे राहुग्रस्ते दिवाकरेऽमायां वा श्राद्धकरणेन अश्वमेध-फलं विन्दति ना । कुरुक्षेत्रपांशुस्पर्शाद् दुष्कर्मणामत्ययो जायते ।

अष्टाविंशत्यध्याये त्रिशूलाख्ये तीर्थे स्नानेन श्राद्धेन पितृतर्पणेन च गाणपत्यं लभते नरः ।

सप्तगङ्गे त्रिगङ्गे शक्रावर्ते च तर्पणाद् देवानां पितृणां च स्वर्ग-प्राप्तिर्भवति । अश्वमेधफल चापि गच्छति ।

एकोनत्रिंशेऽध्याये [1]कालिन्दिमाहात्म्यं, तत्र स्नानेन, दानेन, श्राद्धादिना च निखिलां कामनां प्राप्नोति । तस्य च कल्मषकदम्बं नश्यति ।

द्वात्रिंशेऽध्याये कर्णह्रदे स्नानेन दानेन पितृणां देवानामर्चनेन स्वर्ग-प्राप्तिरश्वमेधफलं च लभते मानवः दुर्गतिस्तस्य नश्यति ।

अष्टत्रिंशदध्याये गयादितीर्थानां माहात्म्यं सुवर्णितम् ।

एकोनचत्वारिंशेऽध्याये - सविद्यां[2] (सद्विद्यां) नामकं तीर्थं वर्तते, यस्य श्रीमर्यादापुरुषोत्तमेन श्रीरामेण तीर्थराज इति संज्ञा कृता । यस्मिन् सन्ध्याकरणेन उत जलकणस्पर्शमात्रेण मूर्खोऽपि भवति विद्वान् विदुषश्च तु कः कथा । एककरतोयानामकं स्थानं वर्तते, यत्र त्रिरात्रमात्रोवपासेन नरोऽश्वमेधफलमश्नुते ।

---

1. अकामो वा सकामो वा यामुने सलिले नृप । इहामुत्र च दुःखानि मज्जनान्नैव पश्यति ।
2. अथ सन्ध्यां समासाद्य सविद्यां तीर्थमुत्तमम् ।
उपस्पृश्य नरो विद्वान् भवेन्नास्त्यत्र संशयः ॥

गङ्गायाः सागरस्य च सङ्गमे स्नानेन वा दशगुणमश्वमेधफलं लभते । पापप्रमोचिन्यां वैतरण्यां गमनेन स्नानेन पुरुषस्य सर्वं कुलं निष्कल्मषं भवति । गोसहस्रदानस्य फलमधिगच्छति मानवः । शोणस्य ज्योतिरथ्यायाश्च सङ्गमे तर्पणेन तथा च वंशगुल्म-स्पर्शमात्रेण वाजिमेधफलं लभते नरः । अस्मिन् अध्याये कालतीर्थस्य बदरिकातीर्थस्य महेन्द्रतीर्थस्य देवह्रदस्य गोकर्णस्य तीर्थस्य च, स्थाने पितृणां तर्पणेन दानेन स्नानेन गायत्र्याः जपेन द्वादशरात्रोपवासेन च मानवोऽश्वमेधफलं वाजपेयफलं गाणपत्यपदं च नरो लभते । एवंबहुविधानि तीर्थानि तेषां माहात्म्यादीनि च वर्णितानि ।

चत्वारिंशेऽध्याये निखिलानि तीर्थानि विष्णुदेहानि अर्थाद् विष्णु-देहसन्निभानि तेषु यद्यत्कृतानि कर्माणि शुभान्यशुभानि वा तानि सर्वाण्यक्षयानि भवन्ति । ब्राह्मणस्याश्वत्थस्य तुलस्याश्च पूजनेन सेवया आराधनेन परिक्रमणेन च नरः सर्वतीर्थावगाहनफलं विन्दति । सूर्यस्य परिक्रमेण पूजनेन जपादिना च सर्वरोगात् प्रमुच्यते तथा च दिव्यदृष्टिर्भवति ।

प्रयागगमनस्यापि महत्फलं वर्णितम् । अर्थाद् ईदृग्विधं फलं न योगेन न सांख्येन न कीर्तनेन नरो लभते ।

एकचत्वारिंशे द्विचत्वारिंशे त्रिचत्वारिंशेऽध्यायेऽपि प्रयागस्य महन्माहात्म्यं वर्णितम् ।

चतुश्चत्वारिंशेऽध्याये माघे प्रयागसेवनं तत्र च स्नानं दानं होमः पितृणां देवानां च तर्पणं भगवत्कीर्तनं करणेन च पुरुषस्य देहे यावन्ति रोमाणि सन्ति, तावत् कालं स्वर्गं नरोऽधिगच्छति । क्षीणे पुण्ये च शुचीनां श्रीमतां[1] गेहे तज्जन्म प्रजायते ।

---

1. स्वर्गलोकमवाप्नोति ऋषिगन्धर्वसेवितः ।
परिभ्रष्टस्तु राजेन्द्र समृद्धे जायते कुले ॥

सप्तपञ्चदशेऽध्याये तिलहिरण्यभूमिविद्याकृष्णाजिनघृतमधुयवगो-धूमशालीनां दानेन पुरुषो निखिलेभ्यः पापेभ्यः उग्रपापेभ्यश्च मुक्तो भवतीति प्रतिपादितम् ।

कृष्णचतुर्दश्यामष्टम्याममायां च त्रिलोचनपूजनमेकादश्यां द्वादश्या-मनाहारो विधेयो नरेणेत्यपि वर्णितम् ।

**पद्मपुराणान्तरगतोत्तरखण्डीयः कर्मकाण्डः**

एकोनविंशेऽध्याये तुलसीपूजनं गृहे रोपणं माघे वैशाखे कार्तिके तुलस्यां हरिपूजनं[1] सर्वपापहरं मोक्षदं च भवति ।

एकविंशेऽध्याये हरिद्वारस्य माहात्म्यं वर्णितम् । गङ्गोदक-स्पर्शमात्रेण सदा तुष्यति वै हरिः । तस्य निखिलाः विपदो यान्ति दूरतः । स्नानकाले यो गङ्गांशब्दमुच्चारयति तस्य समग्रं पाप- कदम्बं विनश्यति । विष्णुलोके तद्वासो भवेत् सदा । तथा च वेतवती नदी तापी पयोष्णी चन्द्रविपाशा कर्मनाशिनी पुष्पा पूर्णा दीपा विदीपा सूर्यनन्दनाख्यासु नदीषु यः स्नाति, स गोदानसहस्रस्या- श्वमेधशतस्य च फलमश्नुत इति त्रयोविंशेऽध्याये वर्णितम् ।

पुनः चतुर्विंशेऽध्याये विशेषरूपेण तुलस्याः माहात्म्यं प्रकीर्तितम् । तुलस्याः कथाश्रवणेन तस्य मृत्तिकादिस्पर्शनेन मृतस्य शवस्य तुलसीकाष्ठेन दाहकरणेन मृतः कोटिपापात् प्रमुच्यते । तुलस्यां विष्णुपूजनेन तुलसीकाष्ठेन होमकरणेन तुलसीकाष्ठेन भगवत्कृते नैवेद्यपाचनेन, गन्धधारणेन तुलसीसन्निधौ पितृणां तर्पणेन[2] श्राद्धेन चाक्षयं फलं लभते ना । तुलस्यां त्रयो देवाः - ब्रह्म-विष्णु-महेश्वराः निवसन्ति । अस्याः पूजनेन रोगनाशो भवति, गृहे रोपणेन पूजनेन च दरिद्रो ईश्वरो भवेत् । शालिग्रामशिलायाः पूजनेन

---

1. कार्तिके चैव माघे तु तुलस्यां पूजयेद्धरिम् ।
   वैशाखे तु विशेषेण पूजनं च हरेः स्मृतम् ।



2. पिण्डदानादिकं पितृणां दत्तमक्षयम् ॥

वाराणस्यां शतवारस्नानस्य तथा च कुरुक्षेत्रे प्रयागे च स्नानेन दानेन च यत्पुण्यं लभते ना, तस्मात् कोटिगुणं पुण्यं शालिग्रामशिलार्चनात् मानवो विन्दति ।

पञ्चविंशेऽध्याये गङ्गा यमुनासरस्वत्याश्च महिमा वर्णितः, तासु स्नानेन दानेन च दरिद्रोऽपि कुवेरतां याति । चण्डालदुष्टबाल-घातिनश्चापि तीर्थत्रयस्य जलकणस्पर्शनेनैव पूतो भवति सद्यो वैकुण्ठं प्रयाति च ।

षड्विंशेऽध्याये कार्तिके मासे सिते पक्षे नवमितः आरभ्य त्रिरात्रव्रतं कार्यम्, तेषु दिनेषु लक्ष्म्या सहितं हैममयं विष्णुं पूजयेदिति वर्णितम् । पूजनप्रकारो मन्त्राश्चापि प्रकीर्तिताः । व्रतदिनेषु जागरणं गीतापठनं गोदानं घृतदानं पायसदानं च महत्पुण्यदं प्रोक्तम् ।

सप्तविंशेऽध्याये अन्नदान[1]प्रशंसा विहिता । अन्नसदृशं न भूतो न भविष्यति अन्नदानं सर्वेभ्यो क्षुधितेभ्यो देयं नात्र शूद्रब्राह्मणविचारणा कार्या ।

अष्टाविंशेऽध्याये जलदानस्याधिकं माहात्म्यं वर्णितम् । तत्कृते कूपतडागदीर्घिकादीनां निर्माणं कार्यम् । यावत्कालं तेषु जलं स्थीयते तावत् स स्वर्गं महीयते । तद्वंशवृद्धिश्च प्रजायते । विशेषतः[2] ग्रीष्मर्तौ जलदानस्यात्यधिकः महिमा वर्णिता तडागोपरि वृक्षारोपण-स्य महत्पुण्यमुक्तम् । सत्यभाषणतश्चाप्यधिकं माहात्म्यं प्रकी-र्तितम्, सत्यवादी नरः सत्यभाषणेन सर्वदेवपूजनफलं[3] सर्वतीर्थाव-गाहनफलं चाधिगच्छति ।

---

1. अनेन (अन्नेन) धार्यते विश्वं जगत् स्थावरजङ्गमम् ।
   अन्नमूर्जस्करं लोके प्राणा ह्यन्ते प्रतिष्ठिताः ॥
2. निदाघकाले पानीयं यस्य तिष्ठति नारद ।
   दुर्गं विषमकृच्छ्रं च न कदाचिदवाप्यते ॥
3. सत्येन वायुरभ्येति सत्येन तपते रविः ।
   सत्येन चाग्निर्दहति स्वर्गं सत्येन तिष्ठति ॥

## मुद्राविषयकविर्मशः

ललाटे एकां गदां धारयेत् । हृदि नाममुद्रां त्रीणि चक्राण्यपि कर्तव्यानि । मध्ये शङ्खद्वयं हृदि पार्श्वे स्तनादूर्ध्वं गदापद्मानि कर्णमूलयोऽधश्चापि त्रीणि त्रीणि चक्राणि कर्त्तव्यानि । एवं द्वादश-विधं गोपीचन्दनधारणेन स नरः विप्रो वा पङ्क्तिपावनपावनः स्मृतः । एवंविधानां भक्तानां दर्शनात् स्पर्शनात् नरो भवति पावनः ।

एकत्रिंशेऽध्याये दीपसंवत्सरं प्रबोधनस्य महन्माहात्म्यं सुवर्णितम् । पूर्वं लक्ष्म्या सहितं नारायणपूजनं विधाय ततोऽव्रणं राजतं हैमं ताम्रं मृन्मयं कुम्भं घृतेन तिलतैलेन प्रपूर्य्य तदुपरि विधिविधानतः (रजतमये हेममये) ताम्रमये दीपे नव तन्तुभिः रचितां कार्पसवर्तिकां प्रक्षिप्य दीपमखण्डं संवत्सरं यावत् प्रज्वालयेत् । पूर्णे संवत्सरे उद्यापनं विधिनान्वितं सोपस्करशय्यासमन्वितं सवत्सधेनुदानोपेतं हैमं राजतवर्तिसंयुक्तं वेदविदुषे विप्राय दात्तव्यम् । अथवा कार्तिके हरि-प्रबोधिन्यामखण्डं दीपं कुर्यात् । अस्य करणेन सर्वविधकामना, स्वर्गं राज्यं मोक्षं प्राप्नोति मानवः । मार्जारेण [1]मूषिकहननपरेण व्याजेन दीपः मन्दीभूतः प्रबोधितः सोऽपि राज्यं प्रापाग्रजन्मनि विधि-विधानेन कृतस्य दीपदानस्य प्रबोधस्य च का वार्ता ।

द्वात्रिंशेऽध्याये जन्माष्टमीव्रतविधानं तदुद्यापनविधिरानन्दकन्द-भगवतः श्रीकृष्णस्यार्चनविधिः सुवर्णितः । यस्य व्रतप्रभावतः राज्ञो हरिश्चन्द्रेण सार्वभौमपदं सर्वरत्नमयी सप्तद्वीपा वसुन्धरा च लब्धा ।

त्रयस्त्रिंशेऽध्याये निखिलानां हिरण्यवस्त्रान्नगोदानभूमिदानानां माहात्म्यं तत्फलं च सम्यगोक्तम् ।

---

1. अहमासं पुरा देवि मार्जारो ब्राह्मणालये ।
ततो नारायणस्याग्रे दीपाः संरक्षितो मया ॥
व्याजेनापि मया देवि प्राप्तं तत्कर्मणो फलम् ॥

चतुस्त्रिंशेऽध्याये मन्दपीडाविनाशाय नराधिपदशरथकृतसौरि-स्तोत्रपठनं तद्दिने च माषोदनदानं तिलदानं कृष्णधेनुदानं वृषभदानं अश्वत्थपूजनं च वर्णितम् ।

पञ्चत्रिंशेऽध्याये त्रिस्पृशाव्रतस्य विषये लिखितम् । त्रिस्पृशाव्रतं तद्भवति पूर्वमेकादशीं तदुपरि द्वादशीरात्रिशेषे त्रयोदशी स्यात् – तत् त्रिस्पृशाख्यं व्रतं भवति । अस्मिन् व्रते विधिविधानेन गणेशादिपूजां बिधाय हैमं राजतं ताम्रमयं आरलकुटमयं वा वित्तानुसारं संस्थाप्य तदुपरि सुवर्णमयीं लक्ष्मीदामोदरयोः प्रतिमां न्यसेत्, सहस्रशीर्षा पुरुषः इत्यादि मन्त्रैः पूजनं कुर्यात् । रात्रौ जागरणं कार्यम् ।

अनेन व्रतेन निखिलानि सर्वविधानि पापानि विलयं यान्ति । एकदा जाह्नव्या माधवः प्रार्थितः । कलौ महान्तः पापिनः आगत्य मयि निमंक्ष्यन्ति । तत् कल्मषैरहं कलुषीभूता भविष्यामि । एषां कल्मषाणां निराकरणं कथं भविष्यति ।

माधवेनोक्तं प्राच्यां दिशि ब्रह्मसुता नाम्नी नदी प्रवहति, तस्यां स्नानं कुरु त्वं जाह्नवी । तयाऽभाणि सति दूरे तत्र गन्तुमशक्याऽहं ततो लक्ष्मीदामोदराभ्यामुक्तं त्रिस्पृशाख्यं व्रतमुपोषय तया तथैव कृतम् । तस्मात्तद्दिनतोऽस्याः निष्कल्मषत्वं जातम् । इदृग्विधोऽस्य व्रतस्य प्रभावः ।

षट्त्रिंशेऽध्याये सितमार्गशीर्षैकादश्यामुपवासेन सर्वविध- दानजं पुण्यं विन्दति ना । दशमीदिने नक्तं कार्यमर्थाद्रात्रौ भोजनं न कर्त्तव्यम् । गोसहस्रेण दानेन भूमिदानेन अश्वमेधेन चन्द्रादिग्रहणेषु तीर्थस्नानेन यत्पुण्यं ततोऽप्यधिकं पुण्यमस्याः उपवासेन[1] लभते नरः । देवराजेनापि दैत्यदानवपराजयाय महादेवादेशेन व्रतमिदमाचरितम् । अस्य प्रभावेणैव साफल्यमधिगतवानिन्द्रः ।

---

1. वैधृते यानि दानानि लक्षैकेन यत्फलम् ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥
कुरुक्षेत्रे च यद्दानं ग्रहणे चन्द्रसूर्ययोः । .. ..कला नार्हन्ति षोडशीम् ॥
धर्मक्षेत्रे च यद्दानं सो[illegible]सहस्रकैः ॥ .. .. ,, ,, ॥

सप्तत्रिंशेऽध्याये – उन्मीलिन्याख्यायाः एकादश्याः व्रतमहिमा वर्णितः। उन्मीलिनी – एकादशी सा भवति, यस्यामहोरात्रं एकादशी स्यात्, परेऽह्नि प्रभाते घटिकाद्वयं भवेत् – सा उन्मीलिनी समाख्याता महादेवेन सर्वदा । अस्याः व्रतमाचरणेन निखिलां कामनां नरो विन्दति तत्क्षणात् । बाल्ये यौवने वार्द्धके कृतानि यानि दुष्कृतानि तान्यपि विनश्यन्ति ।

अष्टात्रिंशेऽध्याये पक्षवर्धिन्या एकादश्याः उपवासस्य महन् माहात्म्यं नारदाय महादेवेन वर्णितम् । अस्य व्रतस्याचरणेन सर्वविधतीर्थस्नानजं[1] पुण्यं प्राप्नोति मानवः । अस्याः पुण्येन नानाविधान्यघानि तूर्णं विलयं यान्ति, सूर्योदये यथा तमो विनश्यति, सुकृतं सितपक्षीयचन्द्रवदेधते[2] ।

एकोनत्रिंशेऽध्याये एकादश्याः व्रतस्य विषये लिखितम् — एकदश्यां नरेणोपवासः कर्त्तव्यः, तस्मिन् दिने रात्रौ जागरणं गीतं वाद्यं नृत्यं च विधात्तव्यम् । एवं करणेन कोटिगुणं पुण्यं लभते व्रती । ये तु सम्पूर्णस्यां निशायां जागरणादिकं कुर्वन्ति ते त्वसंख्यं पुण्यं प्राप्नुवन्ति । द्वादश्याः अपि व्रतस्यैकादशीसङ्काशं फलं वर्तते । व्रतस्याकरणेन रौरवनरकप्राप्तिर्भवति । द्वादशी हरिप्रिया तिथिरस्ति । चत्वारिंशेऽध्याये जयाविजयाजयन्तीनामेकादशीनां व्रतवर्णनं विहितम् । यदा शुक्लैकादश्यां पुनर्वसुनक्षत्रं स्यात्, तदा जया नाम्नी एकादशी भवति । सा तिथीनामुत्तमा तिथिर्ज्ञेया । इयञ्च सर्वपापप्रणाशिनी । यदा च शुक्लद्वादशी श्रवणनक्षत्रसमन्विता, तदा सा विजया तिथिर्भवति । अस्यां विप्रभोजनेन सहस्रगुणितदानस्य फलं प्राप्नोति मानवः ।

---

1. इयं काशी समा पुण्या इयं वै द्वारिका समा ।
   उपोषिता च भक्तेन वाञ्छितं प्रददात्यसौ ॥
2. आमलक्या अधो गत्वा कृत्वा जागरणं रात्रौ गोसहस्रफलं लभते ॥

शुक्लद्वादशी प्राजापत्यनक्षत्रान्विता नाम्नी तिथिर्भवति । इयं सर्वपापहरा सप्तजन्मकृतपापविनाशिनी । अस्यां तिलदानं कार्यम् । अस्यां स्नानदानजपहोमस्वध्यायानां देवतार्चनस्य च महत्पुण्यं प्रोक्तम् ।

मार्गशीर्षकृष्णद्वादश्याः व्रतस्यापि करणेन सकलं दुष्कृतं नश्यति सुकृतं च प्रजायते । व्रतदिने कूपस्नानमधमं वापीस्नानं मध्यमं नदी-स्नानञ्चोत्तमं स्मृतम् । मुरनाम्ना दैत्येन स्वर्गात् सर्वे सुराः विवासिताः । तदधिष्ठितेषु स्थानेषु तेन अन्ये विनियोजिताः । इन्द्रोऽन्यः सूर्यचन्दौ अन्यौ, वायुवरुणौ अन्यौ परिकल्पितौ । भूलोकेऽमर्त्या भ्रमन्तः सन्तः श्रीकृष्णं प्रार्थयामासुः, विष्णुनाऽपि - इमानि व्रतान्युक्तानि एषां व्रतानामाचरणेन तैर्देवैः पुनः स्वस्थानं समासादितम् ।

चत्वारिंशेऽध्याये मार्गशीर्षसितपक्षैकादशीमोक्षदायिनी प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः । अस्याः उपवासेन वाजपेययज्ञस्य फलं लभते नरः । दामोदरस्य विधिना पूजनं तदग्रे निशायां गीतं वाद्यं जागरणं च मोक्षदं भवति । यो नरः केवलां पौराणिकीं कथां श्रृणोति, तस्यापि सर्वपापक्षयो भवति ।

एकचत्वारिंशेऽध्याये युधिष्ठिरेण पृष्टो भगवान् श्रीकृष्णः । मया स्वप्ने रुदन्तः पितरो दृष्टाः । तेषामुद्धरणं कथं स्यात् । मधुसूदनेन भणितम् - मार्गशीर्षो मासो मम देहसमुद्भवः, तस्य या सितैकादशी तस्याः व्रतेन निशायां जागरणेन पुराणश्रवणेन सर्वपापक्षयो भवति । तत्पितरश्च वियोनिं गताः तस्याः व्रतप्रभावेण वियोनिं विहाय मोक्षपदं लभन्ते । अस्याः एवंविधः प्रभावो भगवता श्रीकृष्णेनोक्तः । यो व्रतेऽक्षमः तत्कृते केवलं नामग्रहणमेवोक्तं तेनापि तस्य पापराशिर्याति तूर्णं हि नाशताम् । पुन्नाम नरकाद् यः पितृंस्त्राति स एव पुत्र इत्युच्यते । अस्यां दामोदरस्य विधिविधानेनार्चनं कार्यम् ।

द्विचत्वारिंशेऽध्याये पौषकृष्णैकादश्याः महिमा सुवर्णितः, नागेषु यथा श्रेष्ठः, पक्षिषु गरुडः, देवेषु विष्णुरेवं हि इयमेकादशी ज्ञेया । अस्यां नारिकेलफलं क्रमुकं बीजपूरकं जम्बीरफलं, दाडिमं, धात्री-फलञ्च भगवत्प्रीतये देयम् ।

त्रिचत्वारिंशेऽध्याये पौषशुक्लैकादशी पुत्रदा नाम्नी वर्तते । अस्याः व्रतेन महान्ति पापानि नश्यन्ति पुत्रप्राप्तिर्भवति । अपुत्राणां कृतेऽवश्यमस्याः आचरणं कार्यम् । पुत्रहीनस्य नरस्य जन्म वृथा भवति । [1]पुत्रेण विना गृहं शून्यं भवति । अपुत्रस्य गतिरपि न भवति ।

चतुश्चत्वारिंशेऽध्याये माघकृष्णैकादश्याः महन्माहात्म्यं भगवता कथितम् -- अस्यां तिलमोदकैः पूरितताम्रपात्रदानं तिलहोमः तिलमर्दनं तिलस्नानं तिलोदकदानं तिलभक्षणञ्च कार्यम् । अस्यां छत्रोपानहवस्त्रैश्च कृष्णस्य पूजनं विधेयम् । तुष्ट्यै देयम् । कृष्णा गौरपि हरितुष्ट्यै दातव्या । इयमपि सर्वदुःखहरा स्मृता ।

पञ्चचत्वारिंशेऽध्याये माघशुक्लैकादशी जयानाम्नी सर्वपाक्षयङ्करी निखिलसुखदायिनी आधिः व्याधिश्च विनाशिनी । अस्याः व्रतेना-नुष्ठानेन पिशाचयोनिर्नश्यति ।

षट्चत्वारिंशेऽध्याये फाल्गुनस्यासिते पक्षे या एकादशी सा विजया नाम्नी, अस्याः व्रतेन मनुष्यस्य विजयो भवति । यदा रावणेन सीता हृता तदा रामेणास्याः विधिविधानेन व्रतं विधाय - अगाधवरुणा-लयोपरि सेतुर्विधाय सपरिवारः रावणो जितः ।

सप्तचत्वारिंशेऽध्याये फाल्गुनशुक्लैकदश्यां रात्रौ जागरणेन च गोसहस्रफलं लभंते नरः ।

---

1. अपुत्रस्य गृहं शून्यं हृदयं दुःखितं सदा ।
पितृदेवमनुष्याणां नानृणत्वं सुतं विना ॥

अष्टचत्वारिंशेऽध्याये चैत्रमासासिते पक्षे या एकादशी तस्याः पापघ्नी नाम वर्तते । अस्याः व्रताचरणेन मनुष्यस्य यानि कानि च पापानि जन्मजन्मान्तरार्जितानि तानि सकलानि नश्यन्ति ।

अष्टचत्वारिंशेऽध्याये चैत्रकृष्णैकादशी पापघ्नी एकादशी प्रोक्ता । व्रतमस्याः करणेन सकलां कामनां विन्दति मानवः । अस्याः अपरं नाम पापमोचनिका इति । उपवासेन वै अस्याः सर्वशापो विनश्यति[1] ।

एकोनपञ्चशततमेऽध्याये चैत्रशुक्लैकादशी कामदा नाम्नी सकल-सिद्धिदायिनी, पिशाचभावविनाशिनी, अस्याः अनुष्ठानेन मनुष्यस्य संर्वसमीहितसिद्धिर्भवति । पञ्चाशत्तमेऽध्याये वैशाखस्य कृष्णदले विरुथिनी नाम्नी एकादशी वर्तते । व्रतेन जागरणेन नृत्येन च नारीणां सौभाग्यं वर्धते । मान्धाताऽपि वरुथिन्या व्रतेन स्वर्गमधिगतवान् । भगवान् भवोऽपि - वरुथिन्या व्रतप्रभावेण ब्रह्मकपालहत्यातो विनिर्मुक्तः । दशसहस्राणि वर्षाणि यावत् कश्चित्तपस्तपति यत्फलं लभते नरः तत्फलं वरुथिन्याः व्रतेन मानवो फलमधिगच्छति ।

यानि[2] दानानि शास्त्रे महान्ति कथितानि मुनीश्वरैः । तेषा-माचरणेन यत्फलं मानवोऽधिगच्छति, तत्फलं वरुथिन्याः व्रतेन ना लभते । कन्यादानफलं भूमिदानफलञ्च व्रतेनास्याः प्राप्नोति मानवः । अनया वरुथिन्या व्रतेनः स्वीयान् पितृन् तारयति पुमान् ।

एकपञ्चाशत्तमेऽध्याये वैशाखस्य सिते पक्षे मोहिनी नाम्न्याः एकादश्याः महान् महिमा वर्णितः । वसिष्ठेन बोधितो मर्यादा-पुरुषोत्तमः रामोऽस्याः व्रतं कृतवान् । येन तूर्णमेव महाबलिनं

---

1. चैत्रस्यासिते पक्षे ( नाम्नः ) नाम्नी वै पापमोचनी ।
अस्याः व्रते कृते पुत्र पापराशिक्षयं व्रजेत् ॥
2. अश्वदानान्नृपश्रेष्ठ गजदानं विशिष्यते ।
गजदानाद्भूमिदानं तिलदानं ततोऽधिकम् ॥

जितवान् । इयमभक्ष्यभक्षणसुरापानगणिकासेवनदेवद्विजनिन्दनानि निखिलानि पातकानि नाशयति ।

द्विपञ्चाशत्तमेऽध्याये ज्येष्ठकृष्णदलैकादशी या विद्यते तस्याः अपरा नाम इति । अस्या उपवासेन गोत्रहननभ्रूणहत्याकूटसाक्ष्य-कूटमानकूटवेदकूटायुर्वेददेवज्ञकूटगुरुनिन्दनानि महान्ति पापानि विलयं यान्ति तत्क्षणात् ।

मकरस्थे रवौ प्रयागस्नानफलं काश्यां शिवरात्रेरुपोषणफलं गयायां पितृप्रीतये पिण्डदानफलं सिंहस्थे देवगुरौ गौतम्यां स्नानफलं केदारदर्शनफलं ब्रदीनाथदर्शनफलं रविग्रहणे गुरुक्षेत्रे स्नानफलं गजाश्वहेमदानफलमस्याः सेवनान् ना विन्दति ।

त्रिपञ्चीशत्तमेऽध्याये ज्येष्ठस्य सिते पक्षे विधिविधानेन व्रतेना-चरणेन च यामीं यातनां दुष्कृतजनितदुःखं च न प्राप्नोति वै नरः[1] । आचमनमपि न कार्यम् – ईषदपि जलपानेन व्रतभङ्गो भवति । अस्या स्नानदानजपहोमानां महन् माहात्म्यं वर्णितम् । सितामिश्रितस्य ससुगन्धिकस्य शीतलजलकुम्भदानस्य पायनस्य च महत्पुण्यं प्रकीर्तितम् ।

चतुष्पञ्चाशत्तमेऽध्यायेऽऽषाढस्यासिते पक्षे योगिनी नाम्नी एका-दशी या भवति । तस्याः व्रतेन कान्तावियोग : कुष्ठरोगश्च नश्यति ।

पञ्चपञ्चाशत्तमेऽध्यायेऽऽषाढस्य सिते पक्षे या एकादशी तस्याः नाम देवशयनीति कीर्तितम् । अस्याः उपवासो महान् पुण्यदः, इयं स्वर्गमोक्षप्रदायिनी कथाश्रवणमात्रेण वाजपेयफलदायिनी । अस्यां वामनपूजनं कार्यं तदग्रे दीपप्रज्वालनं कर्त्तव्यम् ।

षट्पञ्चाशत्तमेऽध्याये श्रावणस्यासितें पक्षे कामिका नाम्नी एकादशी वर्तते । अस्याः उपवासेन रात्रौ जागरणेन कीर्तनेन च माधव-पूजनेन च यत्पुण्यं प्राप्नोति, तत्पुण्यं गङ्गायां न काश्यां न पुष्करे न

---

1. गण्डूषाचमनवारि वर्जयित्वोदकं बुधः ।
उपभुञ्जीत नैवेद व्रतभङ्गोऽन्यथा भवेत् ॥

गोदावर्य्यां न गुरौ सिंहेन व्यतिपाते च प्राप्नोति । सोपस्करधेनु-दानादपि अधिकं फलं प्राप्नोति ना । अस्यां मधुसूदनोपरि तुलसी-मञ्जरीधारणात् सुवर्णभारदानस्य[1] यत्फलं भारचतुष्टयस्य यत् फलं तत्फलमधिगच्छति मानवः । अस्या आराधनात् तत्पितरोऽपि परमां प्रीतिं लभन्ते । अस्यां यो दीपं घृतेन तिलतैलेन प्रज्वालयति, स सूर्यलोकं निन्दति ।

रत्नै रर्चितो[2] विष्णुस्तथा प्रसीदति यथा तुलसीदलेन वै । तुलस्या केशवार्चनेन आजन्मपातकं क्षयं याति ।

सप्तपञ्चाशत्तमेऽध्याये श्रावणशुक्ले दले पुत्रदा नाम्नी एकादशी कथिता मुनीश्वरैः । अस्याः अनुष्ठानेन, व्रतेनोपवासेन रात्रौ जागर-णेन केशवकीर्तनेन विधिविधानेन श्रद्धया च धेनुपूजनेन तस्यै सुशीतलजलपायनेन च पुत्रप्राप्तिर्भवति । अस्मिन् दिने केशवोपरि हेममयरौप्यमयताम्रमयक्षौमपाद्मजानाञ्च पवित्रारोपणेन अर्थाद् हरये समर्पणेन सकलसमीहितसिद्धिर्भवति ।

अष्टपञ्चाशत्तमेऽध्याये भाद्रपदस्यासिते पक्षे अजा नामिका एकादशी पुराणज्ञैः कथिता । अस्याः उपवासादिना गतसर्वस्वो नरः पुनः स्वीयं स्वसर्वस्वमधिगच्छति । यथा राज्ञा श्रीहरिचन्द्रेणापि अस्याः अनुष्ठानेन गतराज्यं वनितापुत्रादिकञ्च पुनर्लब्धम् । तस्मात्तद्दितोऽस्याः महान् महिमा जातः ।

एकोनषष्टितमेऽध्याये भाद्रपदस्य सिते पक्षे या एकादशी तस्याः पद्मा – इति नाम कीर्तितं मुनिभिः । एकदा वैवस्वद्वंशसमुद्भूतस्य मान्धातानृपस्य राज्ये द्वादशवर्षाणि यावद् बलाहकाः न ववर्षुः

---

1. न स लिप्यति पापेन पद्मपत्रमिवाम्भसा ।
   सुवर्णभारमेकं च रजतं च चतुर्गुणम् ॥
2. तत्फलं समवाप्नोति तुलसीदलपूजनात् ।
   रक्तमौक्तिकवैदुर्यैः प्रबालादिभिरर्चितः ॥
   न तुष्यति तथा विष्णुस्तुलसीदलतो यथा ॥

महद्दुर्भिक्षमापतितम् । ऋषिभिर्बोधितो भूपोऽस्याः व्रतादिकं चकार । येन वृष्टिर्ववर्ष । उपद्रवाणि नाशतां गताः । अस्याः आराधेनेन निखिलाः विघ्नाः विप्लवाश्च नश्यन्ति ।

षष्टितमेऽध्याये इषस्या(आश्विनस्य)सिते पक्षे इन्दिरानाम्नी एकादशी वर्तते । अस्याः व्रतोपवासेन प्रीणयन्ति । आशीराशिं च प्रयच्छन्ति । अस्यां शालिग्रामशिलाग्रे गोधूमचूर्णेन यवैः व्रीहितिलै-र्माषैश्चणकैर्वा विधिविधानेन च श्राद्धकरणेन श्राद्धाङ्गब्राह्मण-भोजनादिना पितरः परमां प्रीतिमधिगच्छन्ति ।

एकषष्टितमेऽध्याये इषस्य शुक्ले दले पापाङ्कुशा (पाशा-ङ्कुशा) नाम्नी एकादशी वर्तते । अस्यां पद्मनाभाभिधानं विष्णु-पूजनेन पुण्यान्यापतनानि वर्तन्ते, तेषां स्नानजं दर्शनजं च यत्पुण्यं तदधिगच्छति मानवो न स यामीं यातनां नरकादींश्च पश्यति ।

होमस्नानजपध्यानसत्रादीनामाचरणेनास्यां महत्पुण्यं भवति ।

द्विषष्टितमेऽध्याये कार्तिककृष्णैकादशी रमा नाम्नी, इयं महापाप-हरा सर्वरोगहरा चास्ति । अस्याः उपवासादिना रोगी भवति नरः ।

त्रिषष्टितमेऽध्याये कार्तिकशुक्लैकादशी हरिप्रबोधिन्याख्या अस्यां तुलसीविशेषरूपेण विधिविधानेन पूजनीया उपवासो जागरणं हरिकीर्तनमस्मिन् दिनेऽवश्यं प्रकर्त्तव्यम् । इयं गोसहस्रदानजपुण्य-फलदायिनी शतजन्मकृतपापनाशिनी च वर्तते ।

चतुःषष्टितमेऽध्याये पुरुषोत्तममासस्य कृष्णपक्षैकादशी कमला नाम्नी विद्यते । अस्याः व्रतस्य पुरुषोत्तमोद्देश्येन कृतस्य जपादेश्च महान् महिमा वर्णितः ।

पञ्चषष्टितमेऽध्याये पुरुषोत्तममासस्य शुक्लस्य अस्याः व्रतादिना नरो निखिलां कामनां पुत्रपौत्रादींश्च विन्दति ।

षट्षष्टितमेऽध्याये चातुर्मास्यव्रतस्य महत्फलं वर्णितम् — यो या नरो वा नारी चातुर्मास्यव्रतं तन्नियमांश्चाचरति, स सा चाश्वमेधफलं विन्दति — एषु चतुर्षु मासेषु विवाहव्रतयज्ञोपवीतचूडाकरणयज्ञ-

यागादीनि शुभकर्माणि न भवन्ति । देवशयन्यामेका दश्यां मिथुन-राशिस्थतेंऽशुमालिनि विधिविधानेन मधुसूदनस्थापनं कार्यम् । तुलाराशौ गते दिवाकरे माधवोत्थापनं कार्यम्, सुवर्णमयीं प्रतिमां सोपस्करां शय्यां दधिक्षीरमधुलाजाघृतान्वितां वेदविदुषे विप्राय प्रदापयेत् ।

हे[1] जगन्नाथ त्वयि सुप्ते सति सर्वं सुप्तम् । जागृते सति सर्वं जागृतम् । एषु मासेषु गुडं त्यजति, समधुरत्वं प्राप्नोति । तैलत्यागात् सन्ततिं विन्दति । घृतवर्जनात् सुन्दराङ्गवान् भवति । कटुतैलत्यागात् शत्रवो नाशतां यान्ति । सुगन्धतैलत्यागेनाखण्डं सौभाग्यं लभते । कटु अम्लमधुरक्षारतिक्तकषायषड्रसान् यो यात्ययति, तस्य वैरूप्य दौर्गन्ध्यञ्च तूर्णं क्षयं याति । यो नारायणं जपति स शतयुगं फलं लभते । यस्तु एकभक्ताशनो स अग्निष्टोमफलं प्राप्नोति । पञ्च-गव्याशनो नरः चान्द्रायणं फलमधिगच्छति । पत्रावल्यां (पत्तलि-कायां) य एषु मासेषु भोजनं करोति तस्य निखिलानि पातकानि बिलयं यान्ति । ये ब्रह्मज्ञानरतास्तेऽपि ब्रह्मपदमधिगच्छन्ति । गायत्री जापकास्तेषां दर्शनेन ब्रह्महत्यां विनश्यति । एवंविधानि फलान्यु-क्तानि । करणे पुण्यानि - अकरणेऽपुण्यान्युक्तानि ।

सप्तषष्टितमेऽध्याये चातुर्मास्यव्रतानामुद्यापनं यद् यद् वस्तु पूर्वं त्यक्तम् । तस्य तस्य च दानं कार्यम् । परन्तु कुत्रचिद् विशेषरूपेण दानं प्रदर्शितम् । यथा तैलत्यागे घृतं देयम् । घृतत्यागे पयस्तथा । यैः मासचतुष्टयं यावद् दीपः प्रज्वालितस्तै तत्पूर्तये स्वर्गदीपदानं कार्यम् । यैः शाकस्य नियमः कृतः, ते शाकदानं कर्त्तव्यम् । माषभक्षणस्य परित्यागो विहितो मासचतुष्टयं यावत् सौवर्णदानं पारायणे

1. सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिति ।
विबुद्धे त्वयि बुध्येत जगत्सर्वं चराचरम् ॥
— इति प्रार्थना कार्या

विधातव्यम् । चातुर्मास्यं यावत् मैथुनस्य परित्यागोऽङ्गीकृतः वेदविद्भ्यो ब्राह्मणेभ्यो रजतदानमुक्तम् ।

अष्टषष्टितमेऽध्याये यमस्याराधनं पूजनं च वर्णितम् । येन दुस्तरा वैतरणी नदी सुस्तरा भवति । नानाविधाः रोगाश्च विनश्यन्ति । मत्स्यकूर्मवाराहनारसिंहवामनरामरामकृष्णबुद्धकल्कीनां नामोच्चारणेन समग्रा यामी यातना तूर्णं विलयं यान्ति[1] । गोपीचन्दनधारणात् नानाविधानि पातकोपपातकानि विनश्यन्ति ।

अथोनसप्ततितमेऽध्याये तुलसीकण्ठमालाधारणे महिमा वर्णितः, तथा च विष्णुपूजनेन निखिलानि यानि महादानानि तदुत्पन्नानि यानि फलानि तानि फलानि सकलानि विष्णुपूजकः लभते तूर्णम् । विष्णुपूजकस्य दर्शनेन स्पर्शनेन च सकलानि दुरितानि सांसारिकबन्धनानि जननमरणदुःखादीनि च विनश्यन्ति । अस्मिन्नेवाध्याये च वैष्णवधर्मम्य महान् महिमा वर्णितः । यः क्षमा दया तपः सत्यसमन्वितस्तथा च येन द्वादश[2] तिलका अङ्गे धारिताः तुलसीमाला च कण्ठे धारिता, तस्य वेदशास्त्रस्य यज्ञयाजकस्य च दर्शनमात्रेण सकलानि पापानि नश्यन्ति ।

सप्ततितमेऽध्याये सिंहार्कमासे शुक्ले दले श्रवणनक्षत्रोपेतस्य द्वादशीव्रतस्य महत्पुण्यं वर्णितम् । तस्मिन् सरितसङ्गमस्नानस्य विष्णुमुद्दिश्य दानस्य जागरणस्य निजपितृनुद्दिश्य श्राद्धकरणस्य च सहस्रगोदानजं पुण्यं स्वपितृप्रेतभावविनाशनं नरो विन्दति तत्क्षणे ।

---

1. येन वा पुरुषेणापि विधृतं गोपीचन्दनम् ।
मद्यपो ब्रह्महा चैव गोघ्नो वा बालहा तथा ।
मुच्यते तत्क्षाणादेव गोपीचन्दनधारणात् ॥
2. शङ्खं चक्रं गदां पद्मं नित्यं धारयेद् बुधः ।
तिलकान् द्वादशानेव नित्यं धारयेद् बुधः ॥

एकसप्ततितमेऽध्याये आषाढमासेऽसिते सिते वा पक्षे नदीतीरे त्रिरात्रस्योपवासस्य सप्तधान्यदानस्य दीपदानस्य, गङ्गादितीर्थस्नान-स्याक्षयं पुण्यं सुवर्णितम् ।

द्विसप्तत्यध्याये कृष्णनामकीर्तनस्य दशावतारनामोच्चारणस्य विष्णुसहस्रनाम्नः पाठस्य केवलं राम रामेति जपस्य च महन्माहात्म्यं वर्णितम् । अनेन चाण्डालः चाण्डालभावं विहाय पूतात्मा भवति[1] । कृष्णरामनृसिंहगायत्र्या अपि जपस्य महत्पुण्यमुक्तम् ।

त्रिसप्ततितमेऽध्याये विष्णुसहस्रनाम्नः पाठस्य महत्पुण्यमुट्टङ्कितम्[2] ।

पञ्चसप्ततिरध्याये धर्मदानव्रततपसां तथा च देवानां पूजन-मतिथीनां भोजनं पथिकानां शरणदानं च महत्सुकृतदायकमुक्तम् । अनेनायुर्लक्ष्मीः सुताश्च वर्धन्ते ।

षट्सप्ततितमेऽध्याये उत्तरस्यां दिशि गल्लिका नाम्नी सरिद् वर्तते । यथा गङ्गा नदी तथैव सा नदी । यस्यां शालग्रामशिलाः जायन्ते । दशावताराणां प्रतिमा विराजते । ऋषयो मुनयो नागाः यक्षास्तथैव हि यत्र तिष्ठन्ति वै ध्रुवम् । यस्याः दर्शनमात्रेणाण्डजा उद्भिजा स्वेदजाश्च जरायुजाः पुण्यरूपं समाधृत्य मुक्तिं विन्दति निश्चलाम् ।

सप्तसप्तत्यध्यायेऽऽभ्युदयिकमौर्ध्वदैहिकस्तोत्रस्य पठनं श्रवणं दानं विशेषतश्च श्राद्धकाले पठनं महत्पुण्यदमुक्तम् ।

अष्टसप्ततितमेऽध्याये भाद्रशुक्लऋषिपञ्चम्याः माहात्म्यं वर्णितम् । यस्याः व्रतादिना श्वानयोनिबलिवर्दयोनिश्च नश्यति । उद्यापनन्तु स्वर्गं मोक्षदं कथितम् ।

---

1. क्लीं कृष्णाय (विष्णवे) विद्महे । ह्रीं रामाय धीमहि । तन्नो देवः प्रचो-दयात् । शं नृसिंहाय विद्महे श्रीकण्ठाय धीमहि तन्नो विष्णुः प्रचोदयात् ।
2. अतसीपुष्पसङ्काशं पीतवासमच्युतमित्यादि ।

ऊनाशीतितमेऽध्याये[1] अपामार्जनस्तोत्रस्य पठनेन श्रवणेन च सर्वे रोगाः दोषाश्च दूरं यान्ति तत्क्षणात् ।

अशीत्यध्याये तुलसीमालाधारणपुण्यं वर्णितम् ।

द्व्यशीत्यध्याये गङ्गायाः कुशावर्तस्य विल्वकेश्वरस्य नील-पर्वतस्य कनखलस्य च महिमा वर्णितः ।

त्र्यशीत्यध्याये वैष्णवानां लक्षणादीनि सुसम्यक् वर्णितानि ।

षडशीत्यध्याये[2] चैत्रशुक्लद्वादश्यां नगनन्दन्यारथायां रतिसहित-कन्दर्पस्य सर्वतोभद्रमण्डलं विरच्य पूजनमुद्यापनं च वर्णितम् । कामदेवगायत्र्यास्मरणेन महत्पुण्यं भवति ।

सप्ताशीत्यध्याये वैशाख्यां पौर्णमास्यां जगदीश्वरपूजनमाराधनं जागरणं च महत्पुण्यदं सुखञ्चेति वर्णितम् ।

अष्टाशीत्यध्याये श्रावणमासे पवित्रारोपणं कर्तव्यम् । तत्तत् पवित्रकार्पाससूत्रेण क्षौमेण रौप्येण सुवर्णेन च कार्यम् । तद्दानेन विष्णुः प्रसीदति ।

एकोननवतितमेऽध्याये कैः कैः पुष्पैः कस्मिन् कस्मिन् मासे आनन्दकन्दपरमानन्दस्य पूजनं विधेयमिति वर्णितम् । यथा चैत्र-मासे चम्पकेन जातीपुष्पेण वा केशवः पूजनीयोऽनेन क्लेशनाशो भवति, वैशाखे केतकीपुष्पेण जनार्दनोऽर्चनीयः । वृषभस्थे दिवाकरे नानाकुसुमैः पूज्यो भगवान् हरिः । आषाढे मासि करवीरैः रक्तपुष्पैश्च पूजनं विधेयम् । अनेन सौरिजं भयं नश्यति । धनागमने कदम्बकुसमैराराधनीयः घनश्यामः । श्रावणेऽतसीपुष्पेण दूर्वादलेन च माधवः पूजनीयः । भाद्रपदे मासे चम्पकैः रक्तपुष्पैश्च पूजनं विधेयम् ।

---

1. भगवन् प्राणिनः सर्वे विषरोगाद्युपद्रवाः ।
   दुष्टग्रहाभिभूताश्च इत्यादि ॥



2. तत्पुरुषाय विद्महे कामदेवाय धीमहि तन्नोऽनङ्गः प्रचोदयात् ।

त्रिनवतितमेऽध्याये प्रयागोत्पत्तिः कथनं तस्मिन् दानस्नान-श्राद्धादिभिर्महत्पुण्यं भवतीति वर्णितम् ।

चतुर्नवत्यध्याये कार्तिके माघे च कथं स्नानं कार्यं, के च तस्मिन् नियमा कार्याः शौचाचाराश्च सुवर्णिताः ।

सप्तनवतितमेऽध्याये कार्तिकमासव्रतविधिः तुलसीपूजन-मुद्यापनादिकं सुचारूपेण वर्णितम् ।

विंशत्यधिकशततमेऽध्याये कार्तिके परान्नभक्षणे दोषात्यागे च महत्फलम्, तिलधेनुदानं हिरण्यदानं रजतदानमहिम्नो वर्णनं कृतम् ।

एकविंशत्यधिकशततमेऽध्याये कार्तिकमासे व्रतविधिः तस्मिन् दानादिकं च सुलिखितम् ।

द्वाविंशत्यधिकशततमेऽध्याये शालिग्रामार्चनं तल्लक्षणं तदुद्यापनं सम्यग्रूपेण समुट्टङ्कितम् ।

त्रयोविंशत्यधिकशततमेऽध्याये कार्तिके मासे धात्रीवृक्षस्याधो भोजनं पिण्डदानं तच्छायायां शयनादेः महत्फलम् । तुलसीमालायाः च धात्रीफलमालायाः धारणेन मनुष्यः फलं पुण्यञ्चाधिगच्छति ।

चतुर्विंशत्यधिकशततमेऽध्याये कार्तिकमासे सर्वैः सम्भूय गोवर्धन-पूजनं कर्त्तव्यम् । अनेन पूजनेनैव पुत्रं धनं शस्यानि मानवो लभते ध्रुवम् ।

षड्विंशत्यधिकशततमेऽध्याये कार्तिके मासे विष्णोः पूजा कार्या अनया सकलानि कार्याणि सिद्ध्यन्ति[1] ।

एकत्रिंशदधिकशततमेऽध्याये जम्बुद्वीपान्तरगतानि तीर्थानि तेषु तेषु च स्नानदानजपहोमादीनां महिमा वर्णितः, तथा च तानि तीर्थानि कथं समुत्पन्नानीति सुलिखितम् ।

---

1. कुर्वन्ति शान्तिं विबुधाः प्रहृष्टाः क्षेमं प्रकुर्वन्ति पितामहाद्या इत्यादि ।

एकोनचत्वारिंशदधिकशततमेऽध्याये रुद्रमहालये केदारनाथाख्यं तीर्थराजो विराजते । तस्मिन् स्थाने श्राद्धकरणेन पितृणां तर्पणेन च तथा च कार्तिके वैशाखे च वृषोत्सर्गेण केदारोदकाचमनेन च मोक्षं लभते नरः, स रुद्रलोके च तन्निवासो जायते । एतदनुपमं तीर्थमस्तीति ज्ञेयम् ।

चत्वारिंशदधिकशततमेऽध्याये खड्गतीर्थं वर्तते, तत्र स्नानेन दानेन होमेन[1] च खड्गेश्वरो महादेवः सद्यः प्रसीदति । तस्मिन् वैशाखे मासे खड्गेश्वरपूजनेन राज्यलाभो भवति ।

त्रिचत्वारिंशदधिकशततमेऽध्याये जम्बुतीर्थमहिमा वर्णितः, तत्र स्नानेन स्पर्शेन दर्शनेन च ब्रह्महत्या विनश्यति । यदा रामेण रावणो हतः, तद्धत्यानिरासाय तस्मिन् स्नानादीनि कृतानीति लोकविश्रुतम्[2] ।

चतुश्चत्वारिंशदधिकशततमेऽध्याये धवलेश्वरनाम तीर्थं वर्तते यत्र इन्द्रेण स्नानं कृतम्, तद् ब्रह्महत्या विनष्टा । अत्र श्राद्धादिना द्वादशवर्षाणि यावत् पितृणां तृप्तिर्भवति[3] । अत्रैव हि पौर्णमास्यां सङ्क्रान्तौ ग्रहणेन च कृतजपदानश्राद्धहोमादीनि अक्षयफलदानि सन्ति । अर्थादेषां पुण्यानां नाशो नैव जायते ।

पञ्चचत्वारिंशदधिकशततमेऽध्याये भुक्तिमुक्तिप्रदायकं तीर्थं वर्तते । अत्र गुडधेनुदानस्य महन्माहात्म्यं वर्णितम् । गुडोदनदानस्य महान् प्रभावः प्रदर्शितः । अत्र कण्वमुने बालया तपस्तप्तम् । रविपतिप्राप्तये तत्कामना सफला जाता । तस्मात्तद्दिनतोऽस्य बालपेन्द्र नाम सञ्जातम् ।

एकोनपञ्चाशदधिकशततमेऽध्याये दुग्धेश्वरनाम पूतं तीर्थं वर्तते - अत्रैव शुक्रेण तपस्तप्तं चन्द्रेश्वरः स्थापितोऽत्र तिलचूर्णकृतपिण्ड-

---

1. वैशाखे राज्यकामार्थी यः पश्यति तमीश्वरम् ।
2. जितो वै रामचन्द्रेण रावणो निहितो रणे ।

3. श्राद्धे कृते पितृणां तृप्तिः द्वादशवार्षिकी ।

दानेन सप्तजन्मार्जितानि पापानि विनश्यन्ति । तत्पितरश्चाक्षय्यां मुक्तिं विन्दन्ति ।

सप्तपञ्चादधिकशततमेऽध्याये काश्यपाख्यतीर्थस्य महिमा महान् वर्णितः । यत्र काश्यपेन महत्तपस्तप्तमत्र च । अत्र च अग्निहोत्रेण वेदाध्यनेन श्राद्धेन गोदानेन च सकलानि कलियुगकृतपापानि नश्यन्ति ।

सप्तत्यधिकशततमेऽध्याये नृसिंहाख्यं तीर्थमस्ति, यत्र भगवता नृसिंहेन हिरण्यकशिपोर्निधनं कृतम् । अत्र श्राद्धेन जागरणेन विश्वकर्मणः पूजनेन सकलसमीहितसिद्धिं लभते नरः । विशेषतो नृसिंहचतुर्दश्यां नृसिंहकथाश्रवणेन जन्मार्जितः कल्मषकदम्बो नश्यति ।

एकसप्तत्यधिकशततमाध्यायतोऽष्टाशीत्यधिकशततमाध्यायं यावद् गीतायाः महान् महिमा वर्णितः । गीतापठनेन श्रवणेन पारायणेन च नानाविधाः रोगाः कुयोनयः कुत्सितवृत्तयः डाकिनीभूतादीनां भयं च तूर्णं याति नाशताम् ।

नवाशीत्यधिकशततमाऽध्यायतश्चतुर्नवत्यधिकशततमाध्यायान्तम् - भागवतमाहात्म्यं सुचारुरूपेण वर्णितम् । यस्य भागवतमहापुराणस्य श्रवणेन पारायणेन नित्यपठनेन च ऐहिकामुष्मिकजन्मजन्मान्तर- कुकर्मार्ज्जितानि पापवृन्दानि अस्य प्रभावतः एवं नश्यन्ति पलायन्ते यथा नागाः पक्षिराजस्य दर्शनात् ।

पञ्चनवत्यधिकशततमेऽध्याये इन्द्रेण कृतो यज्ञः वागीशेन च कारितः यस्मिन् मखे मुख्यदेवाः समागताः ब्रह्मेशजनार्दनाः । यत्र च विहितो यज्ञः तत्परमं पूतं मनस्तुष्टिकरं खाण्डववनं नाम स्थानमासीत् ।

षण्नवत्यधिकशततमेऽध्याये कालिन्द्या माहात्म्यं वर्णितम् ।

यत्र जपादिभिर्ब्रह्महत्यादिकानि पापानि नश्यन्ति[1] ।

अष्टनवत्यधिकशततमेऽध्याये कालिन्द्यां धेनुपूजनमर्चनं सेवनं महत्पुण्यदं वर्तते । यत्कामयते नरस्तदेव लभते तूर्णम् । दिलीपेन गोसेवया एव रघुनामा पुत्रो लब्धः ।

द्वादशाधिकद्विशततमेऽध्याये तीर्थराजस्य बदर्याख्यस्य महन्माहात्म्यं वर्णितम्, यत्र श्राद्धेन पितृतर्पणेन वियोनिस्था अपि तत्पितरः स्वर्गं गच्छन्ति । यस्य दर्शनेन स्पर्शेनापि मानवश्चतुर्वर्गफलं लभते ।

त्रयोदशाधिकद्विशततमेऽध्याये हरिद्वारे गङ्गासलिलेऽस्थि-पातनस्य महत्पुण्यं वर्णितम् । कार्तिके हरिप्रबोधिन्यां च हरिस्मरणेन जागरणेन च चतुर्वर्गफलं प्राप्नोति । श्राद्धस्य चात्यधिकं पुण्यं वर्णितम् ।

पञ्चदशाधिकद्विशततमेऽध्याये पुष्कराख्यस्य तीर्थराजस्य महत् पुण्यं समाकर्ण्य श्रीमन्नारायणेनापि मासं यावत् (मात्रं वा) वसाम्यत्र इति महती प्रतिज्ञा कृता । अत्र स्वल्पमपि कृतं पुण्यकर्म अनन्त-फलदमस्ति । विस्तारेण विहितस्य दानस्य श्राद्धस्य जपादेश्च का वार्ता ।

अष्टादशाधिकशततमेऽध्याये काशीगोकर्णशिवकाञ्चीतीर्थानां महान् महिमा वर्णितः, येषु तीर्थेषु कृतानि श्राद्धानि कृतानि च वेदाध्ययनाध्यापनादीनि, अनन्तफलदानि चतुवर्गफलप्रदानि सन्ति । गोकर्णं शैवक्षेत्रं वर्तते । तत्र मृतो नरः शिवरूपमवाप्नोति[2] । स्थले जलेऽन्तरिक्षे च मृतो जन्तुः कैलाशे शिवः सम्भूय दीव्यति अर्थादानन्दमनुभवति ।

---

1. तावत् पापानि गर्जन्ति ब्रह्महत्यादिकानि वै ।
   जातं नो दर्शनं यावत्तीर्थस्यास्य बृहस्पतेः ॥



2. गोकर्णं केवलं शैवं क्षेत्रं परमपावनम् ॥

विंशत्यधिकद्विशततमेऽध्याये माघे स्नानस्य महात्म्यं सुवर्णितम् । यानि चतुर्वर्गफलादीनि बहुभिर्यज्ञैर्दानैश्च लभते पुमान् तानि सकलानि फलानि केवलं माघे स्नानेनाधिगच्छति पुरुषः । मौन्यामायां गुप्तदानस्य तथा श्राद्धस्य महत्पुण्यं वर्णितम् ।

पञ्चविंशत्यधिकद्विशततमेऽध्याये धर्मराजस्तोत्रस्य पठनेन महत् पुण्यं भवति । यज्ञयागादिना विना पुरुषः यामीं यातनां नावलोकयतीति । अर्थात् स्त्रोत्रस्मरणेनैव यामी पीडा विनश्यति ।

सप्तविंशत्यधिकद्विशततमेऽध्याये यमलोकवर्णनं कृतम् । तस्मिन् यमलोके पापीनां कृते यानि यानि भयावहानि दुःखानि येन येन कर्मणा भवन्ति तानि समुट्टङ्कितानि ।

त्रयस्त्रिंदधिकद्विशततमेऽध्याये शौचस्नानसन्ध्याभोजनवेदाध्ययनादीनि निखिलानि आह्निककृत्यानि विस्तारेण वर्णितानि ।

चतुस्त्रिंशदधिकद्विशततमेऽध्याये पतिव्रतालक्षणानि तन्निखिलाः धर्माश्च विस्तारेण वर्णिताः । पतिव्रतायाः कृत्यानि सुलिखितानि ।

एकोचत्वारिंशदधिकद्विशततमेऽध्याये सितापुष्यर्क्षसंयुक्ता उपोषिता चैकादशी महत्पुण्यदायिनी एवंविधं फलं प्रयाग-गया-गङ्गा-रेवा-सरस्वती-कावेरी-यमुनादिषु तीर्थेषु अपि नरो न लभते । यादृशं फलमस्याः उपवासेन लभते ।

एकचत्वारिंदधिकद्विशततमेऽध्याये शिवरात्रिव्रतं महत्पुण्यदं सर्वपापक्षयकरं भुक्तिप्रदं मुक्तिप्रदं च वर्णितम् ।

एकाशीत्यधिकद्विशततमेऽध्याये श्रीरामचन्द्राष्टोतरशतनामभिर्नरो यादृशं फलं लभते तादृशं फलं यज्ञयागहोमव्रतादिभिर्नैव लभते[1] ।

---

1. रामाय रामभद्राय रामचन्द्राय वेधसे ॥

## वाराहपुराणोक्तकर्मकाण्डः

पद्मपुराणानन्तरं वैष्णवपुराणेषु वाराहपुराणमन्तिमपुराणत्वे परिगणितम् ।

तत्रान्वर्थनामानः चर्चा विशेषतः प्रतिभाति, यतः अनुसन्धेयविषयः वैष्णवः कर्मकाण्डः - इत्येवंविधकर्मकाण्डश्च कर्मभूमौ सम्पाद्यते कर्मभूमीं च मर्त्यलोके धरातले धरा च दुष्टेनासुरेण हिरण्याक्षेण अपहृता अधोलोकं नीता ।

धरोद्धारायैव भगवान् विष्णुः धृतवाराहरूपः तमसुरं निहत्य धरां उद्धृतवान् संस्थापनां च धरायाः सम्यग्विधाय कर्म सम्पादनाय इयं कर्मभूमिः भगवती भूदेवी पृथिवीरूपा सम्प्रतिष्ठापिता भगवता वराहरूपिणा विष्णुना तथा च पुराणेऽस्मिन् जीवोद्धाराय विविधानि वृत्तान्तानि कर्मोपासना प्रजायकानि वर्णितानि तदधिकृत्यैव वाराहपुराणमिति सार्थकं नाम ।

त्रयोदशेऽध्याये श्राद्धस्य कालः श्राद्धे ग्राह्यानि वस्तूनि तथा च विषुवे सम्प्राप्तये शशिसूर्ययोः ग्रहणे दुस्वप्नदर्शने उग्रासु नक्षत्रग्रहपीडासु इच्छाश्राद्धं प्रकर्त्तव्यम् । आर्द्राविशाखास्वातिपुष्ये पुनर्वसौ रौद्रनक्षत्रे य यदा अमा स्यात्तदा अवश्यं श्राद्धं कर्त्तव्यम् । अनेन द्वादशाब्दं पितरः तृप्तिं प्रयान्ति ।

चतुर्दशाऽध्याये श्राद्धभोजनार्हानां द्विजानां विशदवर्णनं विहितम्[1] । तथा च कन्यादूषयिता, सोमविक्रयी, अभिशप्तः स्तेनः ग्रामयाजकः भूतकाध्यापकः सूतकाध्यापकः देवलकाश्चैते श्राद्धे वर्ज्याः ।

एकोनविंशतितमेऽध्याये यज्ञे विवाहेऽनुष्ठाने श्राद्धेषु तिथीनां माहात्म्यं वर्णितम् ।

---

1. ऋत्विजं भागिनेयञ्च दौहित्रं श्वशुरं तथा ।
जामातरं मातुलश्च तपोनिष्ठञ्च ब्राह्मणम् ॥

द्वाविंशेऽध्याये पार्वत्या सह शिवविवाहो वर्णितः । तस्मिन् विवाहे वेदी क्षितिरासीत् । सप्तसागराः कलशाः आसन् । सूर्यो दीपो बभूव, चन्द्रो जलं धारयामास (अर्थात् निशाकरेण जलपात्रकार्यं कृतम्) तृतीया नारिभिः लवणत्यागः कार्यः अनेन नारीणां सौभाग्यादि-वृद्धिमेति ।

षड्विंशेऽध्याये सप्तमीव्रतमुक्तमस्मिन् व्रते सूर्यस्यार्चनं कार्यम् । अनेन मानवो नीरोगतां भजते । निखिलमिष्टं विन्दति ।

सप्तविंशेऽध्याये अष्टमीव्रतमहिमा वर्णितः । अस्मिन् व्रते बिल्वाहारी व्रतिना विधेयः ।

एकोनत्रिंशेऽध्याये नवम्यां वारारोहा हिमालयस्था देवी पूजनीया । अस्मिन् दिने पिष्टं भोजनीयम् । त्रिंशेऽध्यायेऽपि दशमीव्रतं वर्णितम् । अस्मिन्नेवाध्याये एकादशीव्रतमहिमा कथितः ।

एकत्रिंशेऽध्याये द्वादशीव्रतमुक्तम् । अनेन व्रतेन श्रीविष्णु-प्रसीदतीयं वैष्णवी तिथिरिति ।

द्वात्रिंशेऽध्याये त्रयीव्रतं भवति । इदं ब्रह्मणा धर्माय दत्ता अंतोऽनेन धर्मः प्रसादमधिगच्छति ।

त्रयस्त्रिंशेऽध्याये चतुर्दशीव्रतमुक्तम् । अस्यै ब्रह्मणा रुद्रेण च वरो दत्तः । त्वं सर्वदेवप्रिया भविष्यसीति । चतुस्त्रिंशेऽध्याये पितृप्रियायाः अमायाः व्रतं वर्णितम् । अस्मिन् दिने पितृणां श्राद्धं तिलदानं तिल-तर्पणं तिलभोजनं च प्रोक्तम् ।

पञ्चत्रिंशेऽध्याये पूर्णमासीव्रतं समुट्टङ्कितम् ।

सप्तत्रिंशेऽध्याये विष्णोः आराधनमुक्तम् । अस्मिन् मनसा कर्मणा वाचा विष्णुश्चिन्तनीयः । अहिंसासत्यमस्तेयादिभिर्नियमैः सः सेवनीयः । चत्वारिंशेऽध्याये पौषशुक्लदशमीव्रतं विधेयमित्युक्तम् । पौषमासस्यैकादश्याः अपि व्रतं कार्यमस्मिन् दिने कूर्म्मभगवतो जन्म बभूव ।

एकचत्वारिंशेऽध्याये माघशुक्लद्वादशीव्रतमुक्तम् । अस्मिन् व्रते वराहभगवतोऽर्चनं कार्यम् । अस्यामेव वराहावतरणं जातम् । द्वाचत्वारिंशेऽध्याये फाल्गुनसितैकादश्या व्रतं विधेयमस्मिन् व्रते नृसिंहस्य पूजनमाराधनं कीर्तनमर्चनं च विधातव्यम् ।

त्रयश्चत्वारिंशेऽध्याये चैत्रमासस्य शुक्लैकादश्याः उपवासो विधेयः व्रतिना । वामनभगवतः पूजनमुक्तम् । हाटकमयीं वामन-प्रतिमां विधाय षोडशोपचारैः सम्पूज्य वेदविदुषः साङ्गोपाङ्गा प्रतिमा प्रदातव्या ।

चतुश्चत्वारिंशेऽध्याये वैशाखसितैकादश्या उपवासः कार्यः । परशुरामभगवतो हिरण्यमयीं प्रतिमां विरच्य तां समभ्यर्च्य श्रोत्रियाय देया व्रतिना ।

पञ्चचत्वारिंशेऽध्याये ज्येष्ठमासेऽपि सितैकादश्याः व्रतमुक्तम् । अस्मिन् व्रते रामस्य लक्ष्मणस्य सम्यग् विधिनार्चनं कार्यम् ।

षट्चत्वारिंशेऽध्याये आषाढसितैकादश्याः उपवासः प्रोक्तः । अस्मिन्नुपवासे भगवतो वासुदेवस्य शास्त्रोक्तरीत्या पूजनं विधातव्यम् ।

सप्तचत्वारिंशेऽध्याये श्रावणशुक्लैकादश्याः व्रतमुक्तम् । अस्मिन् व्रते दामोदरस्य साङ्गन्यासैः पूजनादिकं कार्यम् ।

अष्टचत्वारिंशेऽध्याये भाद्रपदसितैकादश्याः व्रतं कथितम् । अस्मिन् दिने कल्किनो भगवतस्य सपञ्चामृतं पूजनं विधाय निशायां जांगरणमुक्तम् ।

एकोनपञ्चाशत्तमेऽध्यायेऽऽश्विनशुक्लैकादश्याः व्रतं भवति । अस्मिन्नुपवासे श्रीमतः भगवतः पद्मनाभस्यार्चनादिकं विधेयम् ।

पञ्चाशत्तमेऽध्याये कार्तिकशुक्लैकादशी हरिप्रबोधनी नामिका अस्याः अपि विशेषरूपेणोपवासो विधेयः । तुलस्याः श्रीविष्णु-भगवतश्च पूजनं कीर्तनं रात्रौ जागरणं च कार्यम् ।

पञ्चपञ्चाशत्तमेऽध्याये मार्गशीर्षासितप्रतिपदि नक्तं व्रतं विष्णु-पूजनं च विधेयम् ।

सप्तपञ्चाशत्तमेऽध्याये – कान्तिव्रतस्य वर्णनं कृतम् । इदं व्रतं फाल्गुनशुक्लतृतीयायां विधेयमनेनाभाग्यो जनः सभाग्यो भवति । तथा च फाल्गुनसितासिततृतीयां सौभाग्यव्रतमपि उक्तम् । अस्मिन् तिल-भोजनं विधेयम् ।

एकोनषष्टितमेऽध्याये फाल्गुनसितचतुर्थ्यां विघ्नहरं व्रतमुक्तम् ।

षष्टितमेऽध्याये शान्तिव्रतमुक्तम् । इदं व्रतं कार्तिकसितपञ्चम्यां कार्यम् । अस्मिन् व्रते शेषोपरि स्थितस्य भगवतो विष्णुपूजनं विधेयम् । तथा चानन्ताय नमः, वासुकिने नमः, तक्षकाय नमः कर्कोटकाय नमः इत्यादिभिः नामभिर्नागपूजनमुक्तम् ।

एकषष्टितमेऽध्याये पौषसितषष्ठ्यं कामव्रतमुक्तम् । कार्तिकेयस्य षोडशोपचारैश्च पूजनं विधेयम् ।

द्विषष्टितमेऽध्याये आरोग्यव्रतं कथितमस्मिन् व्रते षष्ठ्यामेकहारी विधेयः, स सप्तम्यामुपवासं कुर्यात् । सूर्यस्य सुविधिनाऽर्चनं विधेयम् । त्रयःषष्टितमेऽध्याये भाद्रकृष्णाष्टम्यामिदं व्रतमनुष्ठेयमनेन पुत्रप्राप्तिः प्रजायते ।

चतुःषष्टितमेऽध्याये शौर्य्यव्रतमुक्तम् । इदं व्रतमाश्विनसित-नवम्यां विधेयम् । षोडशोपचारैर्भगवतीमर्चयेद् व्रती ।

पञ्चषष्टितमेऽध्याये सार्वभौमव्रतमुक्तम् । इदं व्रतं कार्तिक-सितदशम्यामनुष्ठेयम् । अनेन सार्व्वभौमो भवति जनः ।

सप्तनवत्यध्याये कापालिकव्रतस्यानुष्ठानं विस्तारपूर्वकं सुवर्णितम् ।

नवनवतितमेऽध्याये भगवतो विष्णोः विशेषपूजनप्रकारो वर्णितः । इदं पूजनं कार्तिकशुक्लद्वादश्यां विधेयम् । तथा चान्नदानस्य वैशिष्ट्यमुक्तम् ।

नवनवत्यध्यायतः समारभ्य द्वादशाधिकशताध्यायं यावत् तिलधेनु-जलधेनुरसधेनुगुडधेनुशर्कराधेनुमधुधेनुक्षीरधेनुदधिधेनुनवनीतधेनुलवण-

धेनुकार्पासधेनुधान्यधेनुकपिलधेनूभयमुखीधेनूनां विशेषेण सविधि-विधानेन च साङ्गोपाङ्गं वर्णनं विहितम् ।

विंशत्यधिकशततमेऽध्याये त्रिकालसान्ध्यायाः विधिः प्रकारः फलं च सम्यग् रूपेण वर्णितम् ।

अष्टाविंशत्यधिकशततमेऽध्याये क्षत्रियवैश्यशूद्राणां दीक्षाविधिः सुवर्णितं तथा च दीक्षितानां पूजनप्रकारोऽपि समाख्यातः । एक-त्रिंशदधिकशततमाऽध्यायतः पञ्चत्रिंशदधिकशततमाध्यायपर्यन्तम् - दन्तकाष्ठभक्षणं मृतस्पर्शपुरीषौत्सर्गाकार्याचरणप्रायश्चित्तानि वर्णितानि । चतुश्चत्वारिंशदधिकशततमेऽध्याये शालिग्रामशिवनाम-चक्रनामानां वर्णनं माहात्म्यं सुचारुरूपेण कथितम् । तेषाञ्च सुख-दुःखोत्पादकानि समृद्धिदानि लक्षणानि लिखितानि ।

षट्चत्वारिंशदधिकशततमेऽध्याये हृषीकेशाख्यस्य तीर्थस्य महान् महिमा वर्णितः । तत्र च दानादीन्यपि वर्णितानि । सप्तचत्वारिंशद-धिकशततमेऽध्याये गोनिष्क्रमणतीर्थे स्नानस्य दानस्य च महत्पुण्यं वर्णितम् ।

एकोनपञ्चाशदधिकशततमेऽध्याये द्वारवत्याम् — स्नानस्य दानस्य जपस्य च महत्पुण्यं सद्यः फलदं च प्रोक्तम् । त्रयः-पञ्चाशदधिकशततमेऽध्याये चतुःपञ्चाशदधिकशततमेऽध्याये च मथुरायमुनयोस्तीर्थयोः महान् महिमा वर्णितः । तत्र च स्नान-दानादीन्यपि कथितानि ।

पञ्चपञ्चाशदधिकशततमेऽध्याये अक्रुरतीर्थे[1] स्नानेन प्रयागस्नान-फलं विन्दति जनः । दानेन राक्षसयोनिर्विनश्यति । सर्वोत्तमं इदं शरीरं च भवति ।

सप्तपञ्चाशतदधिकशततमेऽध्याये यमुनापारे मलयार्जुनकं तीर्थं वर्तते । तत्र च महामुनिनिर्मितंमेकं कुण्डमस्ति तस्मिन् ज्यैष्ठसित-

---

1. अक्रूराच्च परं तीर्थं न भूतं न भविष्यति ॥

द्वादश्यां स्नानेन दानेन श्राद्धेन च रुद्रलोकप्राप्तिर्भवति । तस्मिन्नैव स्थाने एकमर्ककुण्डं विद्यते । तत्र स्नानादिना सूर्यलोकप्राप्तिः प्रजायते ।

अष्टपञ्चाशदधिकशततमेऽध्याये वर्षर्तौ हरिशयने च मथुराख्ये तीर्थराजे नानाविधानि कुण्डानि विद्यन्ते । तेषु तेषु कुण्डेषु स्नानेन दानेन श्राद्धेन च आर्द्राः शुष्काः घोरा धीरतमाश्च कल्मष-कदम्बास्तूर्णं नाशं यान्ति ।

षष्ट्यधिकशततमेऽध्याये विश्रान्तिनाम्नः तीर्थस्य परिक्रमणेन दर्शनेन तत्र च श्राद्धेन पितृतर्पणेन च ब्रह्महननादीनि पापानि नश्यन्ति ।

त्रयःषष्ट्यधिकशततमेऽध्याये कपिलर्षिणा मनसा निर्मिता वराह-प्रतिमायाः पूजनस्य दर्शनस्य तत्कीर्तनस्य च महान् महिमा वर्णितः । यत्पूजनेन रावणादयोऽपि मोक्षमधिजग्मुः ।

चतुःषष्ट्यधिकशततमेऽध्याये गोवर्द्धनस्यान्नकूटस्य च प्रदक्षिणेनार्चनेन मानसगङ्गायां स्नानेन पिण्डदानेन पितृणां तर्पणेन च राजसूयाश्वमेधफलं च लक्षते नरः[1] ।

षट्षष्ट्यधिकशततमेऽध्याये असिकुण्डस्य महन्माहात्म्यं वर्णितम्, तत्र च वराहनारायणवामनराघवानां प्रतिमाः दर्शननेन तस्मिन् कुण्डे स्नानेन च चतुःसागरपर्यन्तायाः धरायाः प्रदक्षिणफलं माथुराणां तीर्थानां फलं प्राप्नोति मानवः ।

एकोनसप्तत्यधिकशततमेऽध्याये मथुरान्तर्गतस्यार्द्धचन्द्राख्यस्य तीर्थस्य यत् स्थानं तन् महत्पुण्यदं स्मृतं, तत्र विहितानि स्नान-दानादीनि अक्षय्यफलदानीति समुट्टङ्कितम् । एकोनाशीत्यधिक-शततमेऽध्याये सर्वेषामपराधानामभक्ष्यभक्षणानां राजान्नदानाम् भक्षणदोषस्य च प्रायश्चित्तं लिखितम् । एकाशीत्यधिकशततमेऽध्याये काष्ठप्रतिमायाः स्थापनमर्चनं ध्यानं सुलिखतम् ।

---

1. गोवर्द्धनं परिक्रम्य दृष्ट्वा देवं परं हरिम् ।
राजसूयाश्वमेधानां फलं प्राप्नोत्यसंशयम् ॥

द्व्यशीत्यधिकशततमेऽध्याये शिलाप्रतिमायाः निर्माणमर्चनं स्थापन-मुद्यापनं च सुचारुरूपेण वर्णितम् ।

त्र्यशीत्यधिकशततमाऽध्यायतः षडशीत्यधिकाध्यायान्तं मृण्मयी ताम्रमयी कांस्यमयी रौप्यमयी हाटकमयी च प्रतिमानां निर्माणं स्थापनमर्चनमुद्यापनादिकं सुवर्णितम् ।

सप्ताशित्यधिकशततमेऽध्याये श्राद्धं अन्त्येष्टिक्रियायाश्च सम्यग् रूपेण वर्णितम् ।

अष्टाशीत्यधिकशततमाऽध्यायतो नवत्यधिकशततमाध्यायान्तम् मृतानामशौचनिर्णयः श्राद्धविधिः पिण्डविधिः जलदानविधिः अन्त्येष्टि-क्रियाविधिश्च विस्तरेण लिखितः । अत्येष्टिक्रियायाः श्राद्धस्य च करणेऽकरणे पुण्यपापादीनि वर्णितानि ।

एकनवत्यधिकशततमेऽध्याये कर्मकाण्डस्य मूलभूतस्य विध्यु-त्पत्तिश्च सम्यग् वर्णिता ।



# अथ चतुर्थोऽध्यायः

## श्रौतकर्म

पूर्वप्रकरणे प्रतिपादितं यत् कर्म द्विविधं भवति – श्रौतं तथा स्मार्तम् । श्रौतमर्थात् — श्रुतिषु वेदेषु प्रतिपादितम् । यद्यपि समार्त कर्मापि श्रौतमेव; किन्तु एतावान् विशेषो यत् स्मार्तकर्मसु न केवलं श्रुतिगतमन्त्राणां तथा श्रुतिश्रुतदेवतानामेव ग्राह्यं परन्तु एतदतिरिक्तानां पुराणप्रोक्तानां देवानां मन्त्राणां चोपयोगो भवति । अयमेव श्रौत-कर्मणः स्मार्तकर्मणो मिथो भेदः । एवं पञ्चविधानि कर्माणि विभक्तानि[1] —

1. अग्निहोत्रम्
2. दर्शपूर्णमासौ
3. चातुर्मास्यानि
4. पशु
5. सोमश्च ।

**अग्निहोत्रम्**

अन्युद्देशेन सायंप्रातः क्रियमाणो होमविशेषोऽग्निहोत्रमित्युच्यते । अग्निहोत्रशब्दः तत्प्रख्यन्यायेन कर्मनामधेयम् । अत्र सायंकालेऽग्निः मुख्यदेवता भवति । प्रातस्तु सूर्यो मुख्यदेवता भवति । प्रजापतिश्चाङ्ग-देवता भवति । अनेनैव कारणेन अग्निर्मुख्यदेवतात्वेन अग्निहोत्र-मिति कर्मनामधेयं भवति ।

अग्निहोत्रन्तु महत् प्रशस्यतमं वर्ततेऽतः सर्वैः करणीयम् । यस्याकरणेन महान् प्रत्यवायो भवति । जन्म च निरर्थकं भवति ।

---

1. एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुसोमम्— ऐ. ब्राह्मणे ।

वेदे स्मृतौ च एतत् सम्यक्तया समुट्टङ्कितम् । उत्तरक्रतूनां दर्शपूर्णमासादीनां यथावदनुष्ठानसौकर्य्याभावेऽपि अग्निहोत्रस्य परमापद्गतेनापि पुरुषेणानुष्ठानं कर्त्तव्यम् । तेनैव चेतरक्रत्वनुष्ठानं च बहुशः उद्घोषयन्ति श्रुतयः स्मृतयश्च । ततो दर्शपूर्णमासनामकौ यागविशेषौ अमायां पूर्णिमायाञ्च यथाक्रमं करणीयौ । अमायां पूर्णिमायाञ्च अनयोर्यागयोरनुष्ठानं भवति । अतः दर्शपौर्णमाससंज्ञा अनयोः यागयोः कर्मणो वा दर्शपौर्णमासयाग इति संज्ञा जाता । अत्र यद्यपि दर्शपौर्णमासाविति द्विवेचनं सर्वत्र दरीदृश्यते, तथापि पौर्णमास्यां पूर्णिमायां वा यागत्रयं भवति । आग्नेयाऽष्टकपालः पुरोडाशयागः, अग्नीषोमीयोपांशुयागः – आज्यद्रव्यकः आग्नीषोमीय – एकादशकपाल अमावास्यायां आग्नेयः पुरोडाशयागो भवति अयमेको यागः । अपरः (द्वितीयः) इन्द्रदेवताको दधिद्रव्यकः । तृतीयः इन्द्रदेवताकः पयोद्रव्यकः । एवममायामपि यागत्रयं भवति । उभयोर्योगे कृते सति षड्यागाः भवन्ति ।

अधुनानन्तरमादौ पूर्णिमायामनुष्ठानं ततो दर्शेष्टेः – इदमनुष्ठानं पूर्णिमायाऽऽरम्भमेव भवति । अतः आधानानन्तरममायां समागतायामपि तत्र (तस्यां) यागो न भवति । किन्तु आगामिन्यां पूर्णिमायामारम्भः तत्र पौर्णमासमनुष्ठाय ततो दर्शेऽनुष्ठेयः । एवं एते षड्यागाः सर्वासामिष्टीनां प्रकृतयो भवन्ति[1] ।

दर्शपौर्णमासयज्ञीयपदार्था सङ्क्षेपेण तेषां निरूपणं क्रियते —

1. अग्न्यन्वाधानं,
2. ब्रह्मवरणं प्रणीताप्रणयनम्
3. परिस्तरणं परितः स्तरणं विस्तारणम्
4. पात्रासादनम्
5. शूर्पाग्निहोत्रहवण्योः प्रतपनम् ।

---

1. दर्शपूर्णमासाविष्टीनां प्रकृतिः ।

— आप. श्रौतसूत्रम्, 24/3/32.

चातुर्मास्ययागः चतुर्षु मासेषु एषां यज्ञानामनुष्ठानं भवति । अतः एषां चातुर्मास्य इति संज्ञा जाता ।

**चातुर्मास्ययागः** — ततश्चतुर्मास्यानि – चतुर्षु मासेषु अस्य यागस्यानुष्ठानं भवति । अतोऽस्य चातुर्मास्ययाग इति संज्ञा जाता कर्मणाम् । अस्मिन् चतुःसंख्याकानि पर्वाणि भवन्ति, यथा प्रथमं तावद् वैश्वदेवम् । द्वितीयः वरुणप्रवासाः, तृतीयाः साकमेधाः, चतुर्थः सुनासीरियं च ।

वैश्वदेवपर्वस्य फाल्गुन्यां पूर्णिमायामनुष्ठानं भवति । ततश्चतुर्षु मासेषु व्यतीतेषु मिथुनार्कपूर्णिमायां (आषाढपूर्णिमायाम् – द्वितीय-पर्वस्य वरुणप्रवासाः इत्याख्यपर्वस्यानुष्ठानं भवति । तदनन्तरं पुनः चतुर्षु मासेषु गतेषु तुलार्कपूर्णिमायां साकमेधाः इत्याख्यस्य पर्वस्यानुष्ठानं भवति । पुनः चतुर्षु मासेषु व्यतीतेषु फाल्गुनशुक्ल-प्रतिपदि चतुर्थपर्वस्य शुनःसीरियमियाख्यस्य पर्वस्यानुष्ठानं विधीयते । चातुर्मास्ययागे पक्षद्वयं वर्तते । प्रथमः – उत्सर्गपक्षः । अपरः द्वितीयः यावज्जीवपक्षश्च भवति । सकृच्चातुर्मासैरिष्ट्वा ततः पशुसोमादिना यो यजति उत्सर्गपक्षः । चातुर्मास्यैरेवं प्रतिवर्षं यष्टव्यं स यावज्जीवपक्षः । पुनः चातुर्मास्ययज्ञस्य भेदत्रयं भवति । त्रिविधानि चातुर्मास्यानि — सेष्टिकानि, पाशुकानि, सौमिकानि चेति । पुनस्तस्य चातुर्मासस्य भेदत्रयाणि भवन्ति । संवत्सरिकानि, पञ्चाहिकानि, एकाहिकानि च, संम्वत्सरे भवानि सांवत्सरिकानि । पञ्चाहिकानि पञ्चाभिरेव दिनैः साध्यानि कर्तुं योग्यानि । एकाहिकानि एकस्मिन्नहनि कर्तुं योग्यानि शक्यानि वा ।

**निरुढपशुबन्धयागः** — अयं यागो प्रत्तिसंवत्सरं वर्षर्तौ कार्यः अस्य यागस्यारम्भः – उत्तरायणे सति दक्षिणायने सत्यनुष्ठानं भवति । अर्थादुत्तरायणारम्भे दक्षिणायनारम्भे वारद्वयमनुष्ठानं भवति । अस्मिन् यागो द्रव्यं छागी भवति ।

**आग्रयणेष्टियागः** – अग्रे नवान्नोत्पत्यनन्तरमायनमाचरणं यस्य यागस्य भवति तदाग्रयणम् । इमाग्रयणेष्टिः शरदर्तौ वसन्तर्तौ कर्तव्या । अत्र द्रव्यं पुरोडाशश्चरुश्च ।

**सौत्रामणी** – सौत्रामणी नामा पशुयागो भवति । सुत्राम्णः इयं सौत्रामणी, स च स्वतन्त्रोऽङ्गभूतश्चेति चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता स्वातन्त्र्येण विहिता च प्रधानभृता । स सौत्रामणी यागः त्रिविधो नित्यः काम्यो नैमित्तिकश्च । तत्र फलमनुद्दिश्य कृता सा नित्या हविर्यज्ञान्तरगता । सैव ऋद्धिफलोद्देशेन विहिता काम्याः । सोमकामनादिषु निमित्तेषूत्पन्नेषु तदनन्तरं अनुष्ठेयतया विहिता कृता नैमित्तिकी । स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः । अङ्गभूतायां क्षत्रियवैश्यावप्यधिकारिणौ । तत्र त्रयः पशवः भवन्ति अजो मेष ऋषभश्च ।

अथ सोमयागनिरूपणं क्रियते—

**अग्निष्टोमः** — अत्रानुष्ठाने विकल्पद्वयम् । यदा सोमेन यज्ञं कर्तुमिच्छति तदा कस्मिंश्चिद्वसन्तेऽग्नीनाधाय समनन्तरमेव सोमेनेष्ट्वा ततो दर्शपूर्णमासादिकमनुतिष्ठेदित्येकः । आधानानन्तरं दर्शपूर्णमासादिकमिष्टैवानन्तरं सोमेन यजते इत्यपरः । अस्मिन् यागे सोमरसो द्रव्यं भवति । अस्मिन् यागे सोमनामा लताविशेषः यस्य रसं निष्कास्य होमः क्रियते ।

**वाजपेययज्ञः** — अस्य यागस्य करणे ब्राह्मणस्य उत क्षत्रियस्यैवाधिकारः । नान्यस्यकस्यचिदन्यवर्गस्य एतदतिरिक्ते सप्तसंस्थान्तर्गते वाजपेये तु वैश्योऽपि अधिकारी । अस्य यागस्य समयः शरदर्तौ कर्तव्यः ।

**राजसूययज्ञः** — अस्य यागस्य करणेऽभिषिक्तस्य क्षत्रियस्यैवाधिकारो वर्तते । ब्राह्मणवैश्ययोर्नाधिकारः । अस्य यागस्यारम्भः फाल्गुनशुक्लप्रतिपदायामेव भवति । फाल्गुनशुक्लाष्टम्यां परिसमाप्यते । अष्टदिनसाध्योऽयं यागः ।

**अश्वमेधयज्ञः** — अयमश्वमेधनामा सोमयागः । अस्य यज्ञस्य सम्पादनाधिकारः सार्वभौमराज्ञः कृते एव नान्यस्य भूपस्येत्यर्थः । अस्य यागस्यारम्भः ग्रीष्मर्तौ भवति । तथा च समाप्तिः फाल्गुन-शुक्लाष्टम्यां नवम्यां वा भवति ।

**पुरुषमेधयागः** — अयं पुरुषमेधो ब्राह्मणराजन्यकर्तृकः त्रयोविंशतिदीक्षो द्वादशोपरस्कः चत्वारिंशद्दिनसाध्यो यज्ञः । चैत्रशुक्ल-दशम्यामस्य यागस्य आरम्भो भवति ।

**सर्वमेधयागः** — अयं चतुस्त्रिंशद्दिनसाध्योऽयागः ।

**पितृमेधयागः** — अस्य यज्ञस्य वर्णत्रयस्यैवाधिकारः । अस्मिन् यागे एक एवाध्वर्यु ऋत्विक् भवति । मृतस्य पितुरादेरस्थीनि अरण्यादाहृत्य अस्य अङ्गस्य यदस्थिः, तेन तत्तदङ्गकल्पनेन पुरुषाकृतिं विधाय शेवलकुशादिना तान्यस्थीन्याच्छाद्य पुनः ग्रामं प्रत्यागत्य स्नानं विधाय गृहमागच्छेद् एतावानेव विधिरिति पितृ-मेधः ।

**एकाहयागः** — एकदिनसाध्यसुत्याकः एकानेकदीक्षा-कस्त्र्युपसत्को वा द्वादशोपसत्को वा सोमयागः एकाह इत्युच्यते ।

**अहीनयागः** - अहीनशब्दश्च "अह्नः खः क्रतो" इति वार्तिकेन अहन् शब्दात् खप्रत्यये कृते सति निष्पन्नोऽनेकसाध्यक्रतुवाचको भवति, तत्रापि द्व्यहप्रभृति द्वादशाहपर्यन्ता अहीना इत्युच्यन्ते ।

कतिविधाः यज्ञाः सन्ति — अस्मिन् विषये कात्यायनश्रौतसूत्रे इत्थं प्रतिपादितम् । तत्र वेदे तावत् - वैदिकानि कर्माणि पञ्चधा विभक्तानि । "स [1]एष यज्ञः पञ्चविधोऽग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि पशुः, सोमः "(ऐ. ब्रा.) इति स्मृतिशास्त्रे तु अनेन प्रकारेण यज्ञानां प्रतिपादनं विहितं कृतमिति वा "औपासनहोमः" वैश्वदेवम्, पार्वणम्, अष्टका, मासिकश्राद्धम्, श्रवणा शूलगव सप्त

---

1. (ऐ. ब्रा.) इति स्मृतिशास्त्रे.

इति पाकयज्ञसंस्थाः, अग्निहोत्रं दर्शपौर्णमासौ, आग्रयणम् चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणि, पिण्डपितृयज्ञादयो दर्विर्होमा इति सप्त संख्याकाः पाकयज्ञसंस्थाः सन्ति । अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्याम इति' एवं सप्त सोमसंस्था सन्ति । (गौ. ध., 8/18) । अनेन प्रकारेण श्रौतयज्ञस्वरूपाणि स्मार्तानि यज्ञस्वरूपाणि चैकविंशतिसंख्याकानि भवन्ति । तत्र स्मार्ताः पाकयज्ञसंस्थस्मृतिशास्त्रे, गृह्यसूत्रे वा सूत्रकारेण न निरूपिताः, तासामत्र निरूपणं कृतम् । तथाऽपि तेषां यज्ञानां स्वरूपमतिसङ्क्षेपेण निरूप्यते । तत्र या - इमाः संस्थाः वर्तन्ते, ताः गृहीता स्मार्ताग्निना पुरुषेण स्वाग्नावनुष्ठेया इति । सम्प्रति स्मार्ताग्न्याधानकालो निरूप्यते ।

**स्मार्ताग्निश्च** — "अवसथ्या[1]धानं दारकाले दायाद्यकाले एकेषां [2]भार्यादिरग्निर्दायादिर्वा इत्यादिवचनबलाद् विवाहप्रभृति दायप्रभृत्तिर्वा सम्पादनीयो भवति । तत्र वैवाहिकचतुर्थीहोमानन्तरम् । "अवसथ्याधानं[3] दारकाले" अनेन प्रकारेण सुसम्पादितोऽग्निः स्मार्ताग्निरित्युच्यते । गृह्यः, अवसथ्यः औपासन इति - चानर्थान्तरम् । यदि तु देवान् मानुषाद्वा कस्मात्तेनैव विधिना सम्पादनीयो भवति । इमौ द्वौ कालौ मुख्यत्वेन परिगणितौ परिकीर्तितौ वा । यदि चास्मिन् काले द्वयेऽग्निनाहितः स्यात्तदा स कालः यावान् कालः व्यतीतः तत्कालोक्तं प्रायश्चित्तमनुष्ठाय, तत आधात्तव्यः । अत्र च पितुरगृहीताग्निकत्वे पुत्रस्य स्मार्ताग्निग्रहणेऽधिकारः समस्त्येव । इत्थं गृहीतेऽग्नौ औपासनं होमादिकाः सप्त संख्याकाः पाकयज्ञाः अनुष्ठात्तव्याः । अधुना स्मार्तेऽग्नौ कर्तव्यं कर्म निरूप्यते यथा - अत्र[4]

---

1. पा. गृ., 1/2/1 - 2.
2. गौ. ध., 5/7.
3. पा. गृ., 1/2/1.
4. याज्ञ. स्मृ., 1/97

यद्यपि ''कर्म स्मार्तविवाहाग्नौ कुर्वीत प्रत्यहं गृहात् । दायकाले हृते वापि श्रौतवैताग्निकाग्निषु'' इति याज्ञवल्क्यादिस्मृतिमवलम्ब्य शान्तिकपौष्टिकादिकमपि गृह्येऽग्नौ कुर्यादित्युक्तं देवयाज्ञिकेन[1] ।

तथापि शान्तिपौष्टिकादिकर्मणो बहिशालायामनुष्ठानेन विना वचनमवसत्याग्नेः स्वापतनाद् बहिर्नयने लौकिकत्वापत्या बहिः शालायां विहितानि निखिलानि सीमन्तादीनि लौकिकाग्नावेवानुतिष्ठन्ति शिष्टाः । अतः पाकयज्ञा ये चात्मसंस्कारास्ते सर्वे गृह्याग्नऽग्नौ क्रियन्ते । अन्यत् सर्वं पुत्रसंस्कारकं शान्तिपौष्टिकादिकं च लौकिकाग्नावेवेति ।

पाकयज्ञेषु प्रथमः — औपासनहोमः - अत्र सायं प्रातः ''दध्ना[2] तण्डुलैरक्षतैर्वा ''इत्याभिः द्रव्यैर्हस्तेन क्रियमाणो होमः औपासन इत्युच्यते । तत्र सायंकाले — अग्निः प्रधानदेवता भवति, प्रजापतिश्च स्विष्टकृत् स्थानीयाङ्गदेवता[3] । एवं प्रातः सूर्यप्रधानदेवता प्रजापतिरङ्गदेवता । अयं च सायमारम्भणीयः सायमादिप्रातन्तमेकं कर्म । तेन सङ्कल्पे सायंप्रातर्होम च करिष्य इत्युल्लेखः क्रियते । कालद्वयानुष्ठेययोर्होमयोरेकत्वाच्च मिलितयोरेकं फलं भवति न पृथक् । अत एव च कारणाद् उभयत्रापि द्रव्येण कर्त्रा च एकेनैव भाव्यम् ।

एककालानुष्ठाय कालान्तरेऽनुष्ठाने च न फलप्राप्तिर्जायते । अयं होमो जीवता सपत्नीकेन पुरुषेण यावज्जीवमनुष्ठेयः । अकरणे च प्रत्यवायो भवति ।

### वैश्वदेवकर्म

पाकयज्ञेषु द्वितीयं वैश्वदेवम् । वैश्वदेवमिति च कर्मणो नामधेयम् । विश्वे सर्वे देवा अत्रेज्यन्ते इति । अस्य एव चापरं नाम

---

1. कात्य. श्रौ., 1/1 – 20.
2. पा. गृ., 1/8/3.
3. श. श्रौ., 2/5/1/23.

पञ्चमहायज्ञा इति । "देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञश्च"[1] । इदमपि नित्यं गृहमेधिनः । परन्तु शाखान्तरे सायं-प्रातः कर्तव्यत्वेन विहितोऽपि — अस्माकं प्रातः । श्रौत-कर्मनिरूपणानन्तरमेव कर्मप्रधानेषु वैष्णवोपासनाविधिषु भगवतः पुरुषोत्तमस्य वैष्णवानां कृते प्रामुख्यं प्राधान्यमवधार्य मोक्षोपायतया पुरुषोत्तममाहात्म्यस्य प्रमुखकर्म तदैव विमर्शोऽपि परमोपादेय एवेति विचार्य तद्विमर्शोऽत्र विधीयते । यद्यपि भगवतः पुरुषोत्तमस्य प्रीति-करणमन्यान्यपि कर्माणि सन्ति पुराणेषु निर्दिष्टानि तथापि पुरुषोत्तम-माहात्म्यावधारणेनेदं सत्यमेव यद् वैष्णवेतरा मलमासे तथा न विष्णुप्रसादनाय तदीयार्चनायां प्रवृत्ताः भवन्ति । किन्तु ते भगवतः शिवस्य पार्थिवपूजनादौ प्रशस्तेषु शिवमन्दिरेषु प्रवृत्ता दृश्यन्ते न तत्र तदवसरे शिवस्य विधिविधानतोऽऽचार्य परिहृत्य विष्णुमन्दिरं गत्वा तथेष्टे कर्मणि निरता भवन्ति । अत्र किं कारणं भवेत् तदुत्तर-मिदमेव यत् प्रोक्तमाहात्म्येन प्रायः सर्वेऽधिकमासं मलिनं निष्फलं, विशुद्धिरहितञ्चेत्यादि तत्रत्यकथानकस्य पूर्वप्रसङ्गमवधार्यैव न श्रद्धावन्तो भवन्ति । न च विष्णुप्रीत्यर्थञ्व किञ्चित् कुर्वन्ति । परन्तु तत्रैव माहात्म्ये स्वयं भगवता श्रीकृष्णेन तस्याधिमासस्य स्वामीत्वं-स्वीकुर्वता तस्मिन्नधिमासे कृतानां कर्मणां फलं कोटिकोटि-गुणितमधिकमेव प्रशस्तं प्रोक्तम् । तथा च तदधिमासस्य स्वनाम्ना पुरुषोत्तम इत्यनेन प्रसादनमपि विहितमेव ।

तदनुसारमेव केवलं वैष्णवा एव पुरुषोत्तममासं सर्वोत्तमं मन्वते, तथा तदवसरे भगवतः पुरुषोत्तमस्य सम्यगाराधनञ्चापि यथाविधि क्रियते । पुरुषोत्तमप्रीत्यर्थं यथाशास्त्रमुद्यापनं विधाय कृतकृत्या भवन्ति ।



1. श. ब्रा. 11/5/5/1.

तत्रत्योपासनाप्रभावश्च तत्रस्थकथाप्रसङ्गेनैव प्रमाणितः । अतोऽत्र शोधप्रबन्धे ऐहिकामुष्मिकफलप्राप्तौ श्रौतकर्मविमर्शानन्तरं तदपेक्षया महत्फलप्रयोजकतया पुरुषोत्तमाहात्म्यविषयकविमर्शोऽपि समुचित एव ।

**पद्मपुराणे प्रथमार्द्धे प्रथमेऽध्याये**

बृहन्नारदीयपुराणान्तर्गतानुसन्धेयविषयस्य कर्मकाण्डरूपत्वेन भगवतो विष्णोः पुरुषोत्तमस्याराधनमेव प्राणिनां कृते महत्त्वायेति धिया पद्मपुराणे मलमास(पुरुषोत्तममासयोश्च) विधिः माहात्म्यं चात्र प्रस्तूयते ।

मलिम्लुचे (मलमासे) मासे कर्मकाण्डोक्तानि यज्ञयागप्रतिष्ठा नामकरणचूडाकरणयज्ञोपवीतविवाहादीनि निखिलानि वर्जितानि । केवलमस्मिन् मासे पुरुषोत्तमभगवतः हिरण्यमयीं प्रतिमां विधाय विनायकपूजनानन्तरं स्थापिते कलशे तस्य प्रतिमां संस्थाप्य षोडशो-पचारैनुदिनमर्चनीया । स्नानस्य दानस्य सपत्नीकद्विजपूजनस्य महान् महिमा वर्णितः । पूजनाभावे नानाविधानि दारिद्र्यपुत्रशोकादीनि सुवर्णितानि प्रथमार्द्धे द्वितीयेऽध्याये — साधुनां सेवनं दर्शनं पूजनं महत्पुण्यदं तथा च निखिलतीर्थानां दर्शनेन स्नानेन च मानवो यत्फलं विन्दति, तत् केवलं दर्शनेन पूजनेन स्पर्शनेन च नरो लभते ।[1]

धेनोः पूजनस्यापि महत् माहाम्त्यं वर्णितम् । गोः सर्वाङ्गेषु सकला देवगणाः निवसन्ति । अस्याः गोमयं साक्षाद् यमुनासङ्काशम् । मूत्रञ्च नर्मदा सममिति वर्णितम् । इयमेव निखिलयज्ञयागस्वाहा-स्वधाऽदीनां प्रसादिका[2] मूलभूता च मासिकव्रतानां नक्तानां महत् पुण्यं सुवर्णितम् ।

---

1. साधूनां सेवनं कार्यं सर्वतीर्थफलप्रदम् । कालेन फलते तीर्थं । सद्यो वै साधुसेवनम् ।
2. गावो यज्ञस्य नेत्रे वै गावो यज्ञस्य वै मुखम् । गोभ्यो यज्ञाः प्रवर्तन्ते गोभ्यो यज्ञाः समुत्थिताः ॥

तृतीयेऽध्याये, गीतादानं धेनुदानं हिरण्यदानं च पात्रे देयम् । तदनन्तरफलदं प्रोक्तम् । अपात्रे दत्तानि त्रीणि दानानि निखिलदुःखकराणि सर्वसम्पद्धराणीति प्रतिपादितम् । एकस्मै एव धेनोर्दानं देयम् । यतो हि स विभक्ता विक्रीता वा दातारं नरकं नयेत्[1] ।

सकलकर्मसम्पादकतया ब्राह्मणविचार आवश्यक इत्यालोच्यैव चतुर्थेऽध्याये दशविधानां विप्राणां नामानि लक्षणानि च समुट्टङ्कितानि । तथा देवब्राह्मणः, मुनिब्राह्मणः, राजद्विजः वैश्यद्विजः, शूद्रब्राह्मणः, विडालद्विजः, पशुब्राह्मणः, म्लेच्छब्राह्मणः चाण्डालविप्रश्चेति । यो भिक्षाश्याध्यापकः सन्तुष्टो जितेन्द्रियः । वेदशास्त्रार्थतत्त्वज्ञः स देवद्विजः इत्युच्यते । अकृष्टफलमूलाशी वनवासरतोऽनुदिनं सन्ध्यावन्दनादिकं कर्म कुरुते, स ऋषिब्राह्मण इत्युच्यते । यस्तपस्तपति, सत्यं भणति, हिंसां जहाति काललोपं न विदधाति स ब्राह्मणः प्रोक्तः । यो नीतिमान् शूरोऽश्वाहनतत्त्वज्ञः सङ्ग्रामान् न बिभेति च, स द्विजः राजब्राह्मण प्रोक्तः । यो लोहकर्मणि निष्णातः, पशूनां परिपालकः, कृषिवाणिज्यं च करोति वै, स द्विजो वैश्य उच्यते ।

स्नेहलाक्षातिलनीलीक्षारक्षीरं घृतं मधुमद्यादिविक्रयी विप्रः शूद्रः प्रकीर्तितः । यः स्तेयप्रियोऽदयो लुब्धको दाम्भिकः लोकवञ्चकः हिंस्रकर्मणि निष्णातः स विप्रो मार्जर इति प्रोक्तः ऋषिभिस्तत्त्वदर्शिभिः ।

यो ब्राह्मणः भक्ष्याभक्ष्यं न वेत्ति । परदारान् निस्सेवते । कृत्याकृत्यं न विजानाति कृतघ्नश्च भवति, स ब्राह्मणपशुरुच्यते । यो वापीनां, कूपानां, तडागानां, उद्यानानां क्षेत्रादीनां च ध्वंसकः मार्गनिरोधकः स्नानसन्ध्याविहीनः स म्लेच्छो ब्राह्मणः प्रोक्तः ।

---

1. एका ह्येकस्य दातव्या बहूनां न कदाचन ।
सा विक्रीता विभक्ता च दहत्यासप्तमं कुलम् ॥

यो द्विजः क्रूरो लुब्धकः सर्वभूतेषु दयाशून्यः स्नेहभङ्गकरश्च एवं विधो विप्रः चाण्डालो भवति । अनेन प्रकारेण पद्मपुराणे दशविध-ब्राह्मणानां वर्णनं कृतम् ।

कर्मकाण्डे भूतशुद्ध्यर्थं शरीरेन्द्रियादिशुद्ध्यर्थं च स्नानमाहात्म्यं पद्मपुराणे षष्ठेऽध्यायेऽधिमासे स्नानस्य महान् महिमा वर्णितः । मलिम्लुचे मासे कुत्र - कुत्र स्नानं कार्यं, तस्य किं फलं प्रोक्तमेतदपि सुवर्णितम् । यथा उष्णेन वारिणा स्नानं सम्पूर्णफलदं प्रोक्तम् । शीतोदकेन स्नानं द्विगुणं फलदं, कूपे चतुर्गुणं फलदं प्रोक्तम्, वाप्यं स्नानं कूपादष्टगुणं फलदं प्रोक्तम् ।

कूपाद् दशगुणं फलदं ह्रदस्नानं ह्रदाद् दशगुणं निर्झरि स्नानेन नरो विन्दति । महानद्या महानद्याश्च सङ्गमे स्नानेन सहस्रगुणं फलं नरो विन्दति, मलिम्लुचे स्नानेन दानेन जन्मजन्मार्जितानि कल्मष-कदम्बादीनि तूर्णं याति नाशताम् । पुराणादीनां श्रवणेन बाल्ये यौवने वार्द्धक्ये च विहितानि पापानि कायिकवाचिकमानसिकसांसर्गि-कानि निखिलानि पातकान्येव नश्यन्ति तथा तूलराशौ स्थितोऽ-ग्निकणः तूर्णमेव तूलराशिं नाशयति । तथा च दीपप्रज्वालनस्य महत्पुण्यं वर्णितम् ।

दीपविनाशनेन जन्मजन्मार्जितानि पुण्यानि विनश्यन्ति पापं च लभते नरः । भगवते दीपप्रदस्य पुरुषस्य पुनर्जन्म न जायते ।

अष्टमेऽध्याये कीर्तनस्य हरेः नामोच्चारणस्य महत् सुकृतं सुवर्णितम् । यः प्रत्यहं कृष्ण[1] कृष्णेति कृष्णेति नित्यं कीर्तयति, स कोटियज्ञानां तीर्थानां च फलं विन्दति ।

हरेर्नामकीर्तनात् सकलतीर्थस्नानजं पुण्यं लभते नरः । यश्च प्रत्यहं विधिविधानेन मासं यावत् शिवमर्चति स सर्वविधं पुण्यं विन्दति तं च कलिः बाधयितुमक्षमः ।

---

1. कृष्ण कृष्णेति कृष्णेति प्रत्यहं वक्ति वै कलौ ।
नित्यं यज्ञायुतं पुण्यं तीर्थकोटिफलं लभेत् ॥

नवमेऽध्याये एकान्तवासस्येकोपवासस्य च करणेन नर्मदादीनां तीर्थानां स्नानजं दानजं पुण्यं नरोऽधिगच्छति । ये जनाः मासं यावद् उपवासादिकं कुर्वन्ति तेषान्तु का कथा ।

दशमेऽध्याये मौनस्य महान् महिमा कृतः । उपवासेन यत् पुण्यं लभते नरः, तत् फलं मौनेन सद्यः प्राप्नोति वै जनः, मौनेन सौभाग्यं यशश्च विन्दति पुरुषः । त्रिषु मौनं सदा कार्यं स्नाने होमे भोजने स्नानेन प्राप्यते तेजो होमसमये मौनेन तेजो विवर्धते उत्तमां श्रियं च लभते । भोजने मौनेनायुः वर्धते । मौनेन कलहो न जायते ।

मौनस्य भेदद्वयं वर्तते एकं पापाघ्नमपरं तुष्टिदं प्रोक्तम् । प्रथमं मौनं भोजनान्तं द्वितीयं प्राणाहुत्यन्तम् । प्रथमं पूर्णफलदं द्वितीयं किञ्चिन्न्यूनम् । निखिलानि पृथिव्यादीनि यानि दानानि सन्ति, तेभ्यः सर्वेभ्यो मौनस्याधिकं फलं प्रोक्तम् ।

द्वादशेऽध्याये पञ्च पर्वणां महिमा वर्णितः । गणना च कृता यथा वैधृतिः व्यतिपातश्च राका कुहूः द्वादशी तथा एषु पञ्चपर्वसु दानेन पृथक् पृथक् देवस्तुष्टिमधिगच्छन्ति यथा वैधृतौ दानेन धर्मराट् प्रसन्नतामेति । पौर्णमास्यां दानेन पितामहः प्रसादमधिगच्छति । अमायां श्राद्धेन दानेन च सकलाः स्वपितरः तृप्ताः भवन्ति । येन मानवः इहलोके परत्र च सुखमश्नुते । द्वादश्यां कृतैरुपवास-स्नानादिभिरानन्दकन्दो भगवान् विष्णुः प्रसीदति विशेषतः मलिम्लुचे मासे एषां महन्माहात्म्यं वर्णितम् । त्रयोदशेऽध्यायेऽपि पूर्वोक्तानां पञ्चपर्वणामन्येषां च भुक्तिमुक्तिप्रदानि नानाविधानि फलानि सुवर्णितानि । यथा - व्यतिपाते कृतं दानं सर्वदा - अक्षयं भवेत् । दर्शे विहितं दानं व्यतिपातात् शतगुणं फलदं प्रोक्तम् । सङ्क्रान्तौ विहितं दानं स्नानं होमश्च तर्पणं दर्शादधिकं शतगुणं फलदं प्रोक्तम् । चन्द्रग्रहणेऽपि पूर्वोक्तेभ्यः पर्वभ्योऽधिकं शतगुणं पुण्यं प्रोक्तम् । अमायां पूर्णिमायां दानादिना माधवः प्रसीदति फाल्गुन्यां विहितेन दानेन रजनीकरः सुप्रसन्नो भवति ।

चैत्रमासे या पूर्णिमा भवति, तस्यां दानादिना देवाः प्रसन्नतामियन्ति । वैशाख्यां स्नानदानहोमतर्पणैः पितरः देवाश्च प्रसन्नाः भवन्ति ।

ज्यैष्ठ्यां विहितैर्दानादिभिर्ब्रह्मा प्रसीदति । आषाढ्यां विहितेन स्नानदानहोनेन च सावित्री प्रसीदति । कार्तिक्यां पूर्णिमां दीपदानेन उद्यापनेन च श्रीकृष्णः प्रसादयति ।

मार्गशीर्षे दानेन तर्पणेन होमेन स्नानेन च देवपितरमनुष्य-यक्षकिन्नराः सर्वे प्रसन्नाः भवन्ति । पौष्यां विहितदानं भवान्याः प्रीतिकरं भवेत् ।

पूर्णिमायां दानादिना देवऋणान्मुक्तो भवति मानवः । अमायां श्राद्धादिना पितृणाद् विमुच्यते ।

चतुर्दशेऽध्याये द्वादश्याः महान् महिमा वर्णितः । सर्वेभ्य-स्तीर्थेभ्यो यज्ञेभ्यश्च द्वादश्यां कृतं सुकृतं कर्मानन्तफलदं भवेत् । यथा एकादशीमुपोष्य यश्च धात्रीमूले पिण्डदानं करोति, तेन पुरुषोत्तमः प्रसीदति । अस्मिन् (धात्रीमूले) पिण्डदानेन निखिलयज्ञानां फलं सुविधिना गयायां पिण्डपातनेन यच्च फलमधिगच्छति ना तत् फलं लभते । अस्यां तुलसीपत्रमिश्रितं मक्षिकापादमात्रमन्नं ब्राह्मणाय यः प्रयच्छति स मेरुतुल्यान्नदानस्य फलं विन्दति[1] ।

द्वादश्यां यो जलं प्रयच्छति स सप्तसागरजलदानजं पुण्यं लभते । द्वादश्यां पितृणामुद्दिश्य यस्तर्पणं विदधाति तज्जलममृतो भूय पितृणामुपतिष्ठते । हरेर्दिने भूमिदानेन कल्पं यावत् वैकुण्ठवासं लभते नरः । माधवस्य दिने कपिलादानेन पितरः प्रसन्नाः भवन्ति आशीराशिं च प्रयच्छन्ति ।

माधवदिने उपानहधनवस्त्रपट्टकूलकार्पासकौशेयौर्णिकौष्ट्रिका-दीनि वसनानि मलिम्लुचे प्रदानेन घृतादिदानेन च आकल्पं वैकुण्ठ-वसतिं लभते ना (नरः) ।

---

1. तुलसीपत्रमिश्रान्नं मक्षिकापादमात्रकम् ।
द्वादश्यां ब्राह्मणे दत्तं तदन्नं मेरुतां व्रजेत् ॥

पञ्चदशेऽध्यायेऽपि पुरुषोत्तममासे कर्मकाण्डान्तर्गतानां दानानां महन् माहात्म्यं सुवर्णितम् । माधवदिने योऽन्नं प्रयच्छति द्विजाय तेन नरकात् शतपूर्वजास्तारिताः[1] ।

द्वादश्यां स्नानस्य दानस्य च महान् महिमा वर्णितः । माघे मासे प्रयागे सहस्रस्नानैर्यत् पुण्यं नरो लभते, तत् फलं मलिम्लुचे मासे द्वादश्यां स्नानादिभिः मानवो विन्दति । नारीणां इयं सौभाग्यप्रदा तथा चानन्तसुखदा प्रोक्ता । द्वादशीव्रतेन निखिलतीर्थानां दर्शनेन तेषु च स्नानेन दानेन नरो यत् फलं लभते, तत् फलं केवलं अनया प्राप्नोति मानवः । द्वादश्याः पुरुषोत्तमः स्वयं पतिरस्ति । अतः इयं सकलं पुण्यं दातुं क्षमा ।

षोडशेऽध्याये मलमासस्नानस्य महन् माहात्म्यं वर्णितम् । अस्मिन् मलिम्लुचे स्नानेनाज्ञातपातकानि शुष्कपातकानि वाङ्मनः-कर्मकृतानि पातकानि तूर्णं यान्ति नाशताम् ।

सप्तदशेऽध्याये मलिम्लुचे मासे अपूज्यदेवतापूजनेन सकलां समीहितां सिद्धिं नरो विन्दति । तथा च गवार्चनेन तुलसीसेवनेन पूजनेन चाक्षय्यं स्वर्गं प्राप्नोति पूजकः सेवकश्च ।

अष्टादशेऽध्याये मलमासमासे कृतस्य दिनत्रयस्नानस्य महन् माहात्म्यं सुवर्णितम् । केनचित् स्थविरेण मलिम्लुचे कृतस्य दिनत्रयस्नानस्य माहात्म्यप्रदानेन कश्चित् प्रेतः प्रेतयोनितः मुक्तः ।

एकोनत्रिंशेऽध्याये मलिम्लुचे मासे नरो वा यदि वा नारी एकान्ते निवसति नक्तव्रतमाचरति अक्षयां मुक्तिमाप्नोति । गौरीशङ्करस्य सायुज्यमाप्नुयादिति वर्णितम् ।

विंशेऽध्याये पुरुषोत्तमे मासे स्नानस्योद्यापनस्य ब्रह्मचर्यस्य महन् माहात्म्यं समुट्टङ्कितम् केनचिच्छूद्रेण मासं यावत् गोकर्णीकायां गङ्गायां स्नानं कृतम्, तेन सप्तदिनस्नानमाहात्म्यप्रदानेन सप्तशतानां

---

1. अन्नदः पुरुषो लोके प्राणदाता स्मृतो बुधैः ।
अन्नमाश्रित्य तिष्ठन्ति जीवा ब्रह्माण्डगोलके ॥

प्रेतानां प्रेतयोनितः उद्धारः कृतः । तदनन्तरं ते सर्वे स्नानप्रभावतः स्वर्गं गताः ।

एकविंशतितमेऽध्याये मलमासे वेदाध्ययनपूर्णान्नदानस्य मासं यावत् स्नानस्य महान् महिमा सुवर्णितः । स्नानमात्रेण राक्षसयोनि-र्विनश्यति । वेदाभ्यासससमन्वितेन सदाचारपरायणेन सोमशर्मणा द्विजेन राक्षसप्रार्थनया तस्मै एकदिनकृतस्य स्नानस्य माहात्म्यं प्रदत्तं येन सः राक्षसयोनिं विहाय स्वर्गं गतः ।

द्वाविंशेऽध्याये मलिम्लुचे मासे द्विजस्य सेवाशुश्रूषादेर्महान् प्रभावो वर्णितः । धनदासाख्येन शूद्रेण मासं यावद् ब्राह्मणानां सेवारूपो नियमोऽङ्गीकृतः, तत्सेवया सः कुष्ठरोगं परित्यज्य सपत्नीकः स्वर्गं जगाम । माधवमासे (मलमासे) हिरण्यादिदानानां महत्पुण्यं प्रदर्शितं सुलिखितं च । यथा सुवर्णदानादग्निः प्रसिदति । तेनाग्निप्रसादेन नरो दारिद्र्यं नैव पश्यति ।

गोदानेन मलिम्लुचे मासे गोरोमसंख्यासमानि तुल्यानि सकलानि पापवृन्दानि नाशं यान्ति । ब्रह्मलोकप्राप्तिश्च भवति ।

श्रद्धया मलमासे रजतदानेन निखिलाः स्ववंशजाः पितरः इष्ट-देवताश्च प्रसादमधिगच्छन्ति । ताम्रस्य ताम्रपात्रस्य वा प्रदानेन श्रीशङ्करः प्रसन्नो भवति । पद्मरागादिरत्नानां दानेन नरो नरेन्द्रत्व-मधिगच्छति । विशेषतः मलमासे मौक्तिकदानेन भुक्तिं मुक्तिं च मानवो लभते । वस्त्रदानेन चन्द्रः प्रसीदति । येन मानसिकानि सकलानि दुःखानि विनश्यन्ति । वैदिकवचनादपि रुद्राष्टध्यायीस्थः यः मन्त्रः 'चन्द्रमा मनसो जातः' ।

महन्मूल्यौर्णिकवस्त्रप्रदानेन निखिलानि यमयातना समुद्भूतानि भयादीनि विनश्यन्ति । धान्यदानेन श्रीवासुदेवः प्रसीदति, येन पुरुषः – ऐहिकीं पारलौकिकीं समीहितसिद्धिं च विन्दति ।

उपानहत्प्रदानेन यममार्गे सुखेन नरो प्रयाति । घृतदानेन श्रीसूर्यनारायणस्तुष्टिं याति, येन पुरुषः रोगरहितो भवति । नेत्र-

ज्योतिश्च प्रवर्धते । आरोग्यं भास्करादिच्छेदिति वचनादपि ।

तिलतिलपात्रप्रदानेन रुद्रलोकप्राप्तिर्भवति । धनधान्यवस्त्राभरणैः सपत्नीकं द्विजं पूजयति यः सः कृतकृत्यो भवति जन्मजं फलं च लभते ।

सप्तधान्यदानेन सप्तर्षयः प्रसन्नाः भवन्ति । सप्तर्षिलोके तस्य पूजां भवति ।

मोदकानां घनकर्पूरसिताखाद्यादिसमन्वितानां दानेन श्रीपुरुषोत्तमः प्रसीदति । विशेषतः मलिम्लुचे मासे पूर्वोक्तानि दानानि सद्यः फलप्रदानीति ।

चतुर्विंशतिरध्याये स्नानजपहोमव्रतनक्तादीनां महत् माहात्म्यं सुवर्णितम् । मलमासे सिततृतीयायां ब्रह्मवृक्षस्याधो भागे पार्वत्याः मातुः मेनायाः हेमीं प्रतिमां विधाय तत्प्रतिमापूजनं तत्रैव सपत्नीक-द्विजभोजनं च कार्यम् । अनेन नारीकृतेऽखण्डसौभाग्यप्राप्तिः प्रजायते ।

सप्तविंशतिरध्याये मलमासस्योद्यापनं, हेमराजतताम्रारलकूट-(पैत्तलमय)मृन्मयकलशानामुपरि हिरण्यमय्याः पुरुषोत्तमप्रतिमायाः षोडशोपचारैश्च पूजनं सोपस्करशय्यादानं सोपस्करापयश्विनीदानं च सुवर्णितम् । पुरुषोत्तमप्रीतये इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा सुरे स्वाहा ।

इत्यनेन मन्त्रेण सगव्यपायसहोमश्च कार्यः व्रतिना ।

**बृहन्नारदीयपुराणेऽष्टादशेऽध्याये**

पुरुषोत्तममासे अखण्डस्नानस्य निराहारस्य जागरणस्य च महन्माहात्म्यं सुवर्णितम् । केनचित् सुदेवाख्यद्विजेन सपत्नीकेन मासं यावदखण्डस्नानं निराहारो जागरणं च कृतं, येन प्रभावेण मृतपुत्रस्य पुनर्जीवनं द्वादशवर्षसहस्रायुश्च पुत्रस्य लब्धम् ।

विंशतिरध्याये पुरुषोत्तमव्रतिकृतेऽऽह्निकं कृत्यं सुवर्णितम्, यथा ब्राह्मे मुहूर्ते उत्थाय परब्रह्मणश्चिन्तनं विधेयम् । ततः सोदक-

भाजनो नैर्ऋताशां व्रजेत् । ग्रामाद् दूरतरं गच्छेत् - उदङ्मुखीभूय दक्षिणे कर्णे ब्रह्मसूत्रं सन्धारयेत् । शिरोमुखं च वसनेन परिधाय मूत्रपुरीषोत्सर्गसमये ष्ठीवनं स्वासग्रहणं च न कुर्यात् । निशायां दक्षिणाभिमुखीभूय मलादेस्त्यागः कार्यो व्रतिना । गृहीतशिश्नश्चोत्थाय शुचिं मृत्तिकां गृहीत्वा दुर्गन्धक्षयकरं शौचं कुर्यात्, अर्थात् मृत्तिकया हस्तपादादीन् शोधयेत् । एकबारं मृत्तिकया लिङ्गं शोधनीयं पञ्चवारं गुदां मृत्तिकया शोधयेत्, त्रिवारं वामहस्तं मृत्तिकया शोध- येत् । दशवारं मृत्तिकया करयुगलं शोधयेत् । त्रिवारं सप्तवारं वा पादयुगलं विशोधयेत् । एतद् गृहस्थानां कृते शौचमुक्तम् । तीर्थे कदापि शौचं नैव कार्यम् । पात्रेण उद्धृतवारिणा शौचादिकं विधे- यम् । षोडश गण्डूषान् द्वादशगण्डूषान् व्रती गृहस्थी वा कुर्यात् । मूत्रोत्सर्गेऽष्टौ चतुरो वा गण्डूषान् कुर्यात् । नेत्रे जलेन प्रक्षाल्य दन्तकाष्ठं समाहरेत् इमं मन्त्रमुच्चारयन् —

**आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।**
**ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥**

अपामार्गस्य वादरस्योदम्बरस्य च काष्ठादिना दन्तधावनं विधेयम् । कनिष्ठाङ्गुलिवत् स्थूलं द्वादशाङ्गुलं दन्तकाष्ठं विधातव्यम् ।

भानुवासरे दन्तधावनं नैव कार्यम् । द्वादश गण्डूषा एव कार्याः । समुद्रगामिन्यां नद्यां स्नानं कुर्यात्, तत् स्नानमुत्तमं प्रोक्तम् ।

वापीस्नानन्तु मध्यमं गृहस्नानं च सामान्यं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः । शुक्लं शुद्धं नवीनं धौतोत्तरीयं परिधाय सपवित्रकरेणाचमनं कार्यम् । नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं च वर्जयेत् । गोपीचन्दनेन ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं मध्ये विच्छेदसमन्वितं तिलकं कुर्यात् व्रती सदा[1] । तिलकलक्षणं श्वेतं ज्ञानकरं भवति रक्तं वश्यकरं पीतं च सर्वार्थदं भवति । शङ्खचक्रादिकं चिह्नमपि कार्यमनेन

---

1. निवसत्यूर्ध्वपुण्ड्रे तु श्रिया सह हरिः स्वयम् ।
त्रिपुण्ड्रधूर्जटिः साक्षादुमया सह सर्वदा ॥
विना छिद्रं तु तत्पुण्ड्रं शुनःपादसमं विदुः ॥

संकलानि पापकदम्बादीनि विनश्यन्ति । शङ्खचक्रयुतो मर्त्यो मर्त्यो न भवति, स साक्षाद् भगवत्तनुः[1] भवति । यः नारायणस्यायुधानि धारयति स यदि पापकोटिभिर्युतः स्यात्तदापि तं यमकिङ्कराः बाधयितुमक्षमाः । ततः सनक्षत्रां सन्ध्यामुपासीत गायत्रीमन्त्रं च जपेत् । सावित्रैरनघैर्मन्त्रैरुपस्थानं कुर्यात् । आत्मपादौ तथा भूमौ सन्ध्याकालेऽभिवादयेत् । यस्य स्मृत्यादिमन्त्रेण ऊनं परिपूरयेत् । त्रिकालसन्ध्यां करोति तत्कृते स्वर्गे मर्त्ये च पाताले किमपि न दुर्लभम् । दिनस्यादिभागे अर्थात् पूर्वाह्ले दैविकं कृत्यमुक्तम् । गोमयेन वर्तुलं चतुरस्त्रं वा भूमिमुपलेपयेत्, तदुपरि तण्डुलैरष्टदलं विधाय हेमं राजतं ताम्रं वा कलशं स्थापयेद् व्रती । कलशस्य पूजनं विधिना विधाय तस्मिन् मुखे विष्णुं कण्ठे रुद्रं मूले ब्रह्माणं मध्ये मातृगगादींश्च ध्यायेत् । कलशोपरि पीतवस्त्रावेष्ठितं पात्रं न्यसेत् । तदुपरि हैमं राधया सहितं हरिं स्थापयेत् । षोडशोपचारैः पुरुषसूक्तेन पूजनं कर्त्तव्यम् । ततः कथाश्रवणादिकं कार्यमिति ।

एकविंशतिरध्याये आनन्दकन्दभगवतः पुरुषोत्तमस्य प्रतिमायाः प्राणप्रतिष्ठा – अग्न्युत्तारणं पञ्चामृतस्नानं होमश्च सुवर्णितः ।

चतुर्विंशतिरध्याये निखिले पुरुषोत्तमे मासे भगवतस्तुष्टयेऽखण्ड-दीपप्रज्वालनस्य महन् माहात्म्यं सुचारुरूपेण वर्णितम् । इङ्गुदीजेन तैलेन दीपप्रज्वालनेन निष्कण्टकराज्यस्य प्राप्तिर्भवति; परन्तु सर्पिषा तिलतैलेन वा प्रज्वालयति दीपं तस्य तु का वार्ता फलं वक्तुम् ।

पञ्चविंशतिरध्याये पुरुषोत्तममासस्योद्यापनविधिः सम्यग्रूपेण सुवर्णितः यथा – पुरुषोत्तममाससमयसिताष्टम्यां नवम्यां चतुर्दश्यां वा उद्यापनं करणीयम् । तस्मिन् उद्यापने चत्वारो वेदवेदाङ्गज्ञातारः सदाचारपरायणाः सन्ध्याकर्मादिसमन्विताः आचार्याः ब्रह्मादिस्थानेषु वरणीयाः । तेभ्यः सुवर्णं पवित्रं द्वे द्वे वस्त्रे कमण्डलुः काष्ठपादुका

---

1. शङ्खचक्रादिचिह्नानि दृश्यन्ते यस्य विग्रहे ।
स मर्त्यो मर्त्यो न विज्ञेयः स नित्यं भगवत्तनुः ॥

च प्रदातव्या, परन्तु आचार्याय विशेषरूपेणाभूषणानि प्रदातव्यानि । ततः देहविशुद्ध्यर्थं प्रायश्चित्तमपि कार्यम् । चतुर्व्यूहजपोऽपि ब्राह्मणैः कार्यः । वेदी प्रकल्पनीया चतुर्दिक्षु प्रदीपाः अपि प्रज्वालनीयाः । ततः नारिकेलपूगीफलपञ्चरत्नसमन्वितं पुष्पचन्दनं तण्डुलोपेतमर्घ्यं सस्त्रीकः जानुभ्यां सक्तभूतलः हरिं स्मरन् अर्घ्यं दद्यात् । त्रयस्त्रिंशत् संख्यकान् द्विजान् भोजनाय निमन्त्रयेत् । भगवतः पुरुषोत्तमस्य ध्यानं स्तुतिं षोडशोपचारैश्च पूजां कुर्यात् । उद्यापनाङ्गीभूतां सोपस्करां गां वैष्णवाय द्विजाय दद्यात्[1] । इदं दानं कन्यादानसहस्रात्, सधान्यक्षेत्रदानात् तुलादिभ्यश्चोत्तमोत्तमं प्रोक्तम् ।

षड्विंशेऽध्याये पुरुषोत्तममासे गृहीतनियमव्रतिना व्रतसमाप्ति-काले व्रतपूर्तये दानं देयमिति सम्यग्रूपेण वर्णितम् ।

मासं यावत् येन नक्तभोजनं विहितम्, तेन ब्राह्मणाः भोजनीयाः । अयाचितव्रतिना स्वर्णं देयम् । धात्रीस्नाननियमसमन्वितेन दधिदुग्धं च देयम् । त्यक्ततैलं व्रतिना घृतं देयम् । मासं यावद् भूशायिना शय्या देया । मौनव्रतिना घण्टातिलहेमादीनि च देयानि । नखकेशव्रतिना दर्पणं देयम् । उपानहत्यागिना उपानहौ देयौ । लवणविसर्जकेन विविधाः रसाः देयाः । मासं यावत् पुरुषोत्तमसमक्षे येन दीपः प्राज्वालितः, तेन काञ्चनवर्तियुतं ताम्रमयं सघृतं रजतमयं दीपदानं विधेयम् । पुरुषोत्तममासे पूर्वोक्तानि कृतानि दानानि ब्रह्महत्यादीनि नानाविधानि पापानि रोगांश्च नाशयन्ति । शुक्लायाः कृष्णायाश्च द्वादश्याः उपवासो विधेयः अथवा दशमी द्वादशी दिने - एकभुक्तं व्रतं कार्यम् । दर्भं कूर्चं च वर्जयेत् — दर्भेण मूत्रं पुरीषं च श्लेष्माणं रुधिरं च यो मार्जयति मूढधी स विष्ठायां जायते कृमिः । शूद्रेण दर्भा नोत्पाटनीयाः । दर्भे देवत्रयाणां निवासो वर्तते । दर्भमूले

---

1. देव देव नमस्तुभ्यं पुराणपुरुषोत्तम ।

गृहाणार्घ्यं मया दत्तं राधया सहितो हरेः ॥

वसेद् ब्रह्मा दर्भमध्ये जनार्दनः दर्भाग्रे तु उमानाथस्य निवासः प्रकीर्तितः । यस्तु देवप्रोक्तानि शास्त्रवचांसि उल्लङ्घयति स शूकरयोनिं कुक्कुटयोनिमधिगच्छति ।

एकोनत्रिंशेऽध्याये गृहस्थानामुपकारापाह्निकं नियमाः सुवर्णिताः । यथा प्रातःकाले सन्ध्यादिकं विधाय मध्याह्नकालिको सन्ध्यां तर्पणं च कृत्वा देवा मनुष्या पशवो वयांसि सिद्धाश्च यक्षोरगदैत्यसङ्घाः प्रेताः पिशाचा उरगाः समस्ता पञ्चान्नमिच्छन्ति मया प्रदत्तम् । अनेन प्रकारेण बलिदानं कुर्यात् । ततः पञ्च महायज्ञान् कुर्यात् । काकेभ्यः कुक्कुरेभ्यश्च बलिं प्रदापयेत् ।

तदनन्तरं द्वारावलाकेनं कृत्वा यदि कश्चिदतिथिरागच्छेत्, तस्मै भोजनादिकं देयम् । गोदोहनकालेऽपि एवं हि कुर्यात् । यदि कश्चिद् भिक्षुकः समागच्छेत्तस्मै भिक्षां दद्यात् । अन्यथाकरणेन अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति ॥

यतिकृते ब्रह्मचारिणे च पक्वान्नं देयम् । यतो हि तयोः पक्वान्नेनाधिकारः यदि एवं न कुरुते कश्चित् स चान्द्रायणव्रतार्हो भवति ।

ओङ्कारमुच्चार्य[1] भोजनं कार्यम् । घृतप्लुतान् पञ्चग्रासान् - दन्तदशनेन विना जिह्वया भक्षयेत् । भोजनान्ते स्वाहा प्रयोगः कार्यः[2] । पूर्वं मधुरं भोक्तव्यं ततो लवणं मध्ये कटुतिक्तसमन्वितमष्टौ ग्रासाः मुनिना भोक्तव्याः षोडशारण्यवासिना । द्वात्रिंशत् ग्रासाः गृहस्थिना भोक्तव्यः ब्रह्मचारिणाऽमिताः ग्रासाः भोक्तव्याः । शास्त्रविरुद्धं भक्ष्यं भोज्यं पेयादिकं न कुर्यात् । पर्युषितं शुष्कं द्विपाचितमन्नं च न भक्षयेद् व्रती । घृतं दुग्धं परित्यज्य सर्वमशनीयात् । शेषमन्नं भोजन-

---

1. प्रणवं पूर्वमुच्चार्य स्वाहान्ते च घृतप्लुतं । पञ्च कृत्वाग्रसेदन्नं जिह्वया न तु दंशयेत् ।
2. अष्टौ ग्रासा मुनैर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशच्च गृहस्थस्य त्वमितं ब्रह्मचारिणः ।

पात्रतोऽन्यत्र न्यसेत् । जलपूर्णामञ्जलिं विधाय ततोऽर्धं जलं पीत्वाऽर्धं भूमौ क्षिपेत्, अन्यथा पापभागी भवेन्नरः । तदनन्तरं षोडश गण्डूषान् कुर्यात् । ततो भोजनपरिपाकार्थं[1] इमौ मन्त्रौ पठन्नेव पाणिनोदर- मालभेत् । तदनन्तरं भुक्तोपविष्टः श्रीकृष्णं परब्रह्म विचारयेत् । सूर्यास्तं परिज्ञाय सायं सन्ध्यां समाचरेत् । कदाचित् सङ्कटे प्राप्ते सति उत पथि स्थिते सति काललोपेऽपि अर्धरात्रावपि सन्ध्या कार्या[2] । प्रातःसन्ध्याकालः —

**उत्तमा तारकोपेता मध्यमा लुप्ततारका ।**
**अधमा सूर्योपेता प्रातःसन्ध्या त्रिधा मता ॥**
**उत्तमा सूर्योपेता मध्यमा लुप्तसूर्यका ।**
**अधमा तारकोपेता सायं सन्ध्या त्रिधा मता ॥**

ततो वारुणीं ऋचां रात्रिसूक्तं पठन् विष्णुं स्मरन् - अगस्त्यो माधवश्चैव मुचकुन्दो महाबलः । कपिलो मुनिराशीकश्च पञ्चैते सुखशायिनः । इति पठन् उच्चारयन् - स्वपन्निशि शिरःस्थाने माङ्गल्यं कुम्भं निधाय गुरुडैर्मन्त्रैः स्वरक्षां कुर्यात्, पूर्वदिनं परित्यज्य ऋतुकाले स्वनारीं सेवेत । यामद्वयं शयनं विधातव्यम् । प्रदोष-पश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । इमानि गृहस्थिलक्षणान्यपि प्रोक्तानि, यथा — अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् । शमो दानं यथा शक्तिर्गार्हस्थ्यो धर्म उच्यते ।

परदारेष्वसंसर्गः धर्मस्त्रिपरिरक्षणम् । अदत्तं वस्तु नैव ग्राह्यं मद्यं मांसं च विवर्जयेत् । एष पञ्चविधः धर्मः बहुशाखः सुखोदयः । उत्तमैः पुरुषैः शारीरको धर्मोऽवश्यं विधेयः ।

---

1. अगस्तं कुम्भकर्णं च शनिं वडवानलम् ।
आहारपरिपाकार्थं स्मरेद्भीमपञ्चकम् ॥
आतापी मारितो येन वातापी च निपातितः ।
समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥
2. यस्मिन् सन्ध्यामुपासीत ब्राह्मणः श्रद्धयान्वितः ।
तत्तेजो वर्धतेऽत्यन्तं नित्यं घृतेनैव हुताशनः ॥

त्रिंशेऽध्याये पतिव्रतानां नारीणां लक्षणधर्मकर्तव्यादीनि सुवर्णितानि । यथा कुवृत्तं दुःस्वभावं रोगान्वितं पिशाचं सुरापिनं स्थविरं विदग्धं मूकमन्धं रौद्रं निर्धनं कातरं कितवं ललनालम्पटं च भर्तारं देववत् सत्करोति या सा सती ज्ञेया । कान्तेन सह विषमं स्त्रिया न जातु कार्यम् । अहङ्कारक्रोधौ परिज्यत्य मनसा पत्युः रञ्जनं विधेयम् । गृहेऽपि स्वातन्त्र्येण किञ्चिदपि कार्यं न कार्यम् । या परपुरुषं मनसाऽपि नैच्छति स परमा सती ज्ञेया । पत्यौ प्रसन्ने सति या प्रसन्ना दुःखिते सति या दुःखान्विता सा पतिव्रता ज्ञेया । सुरूपं तरुणं रम्यं कामं सर्वगुणसमन्वितं या नेच्छति परकान्तं सा परमा सती । पत्यौ भुक्ते या भुक्ते स्वपति तत्स्वपते (शेते) पूर्वमेव प्रबुद्ध्यति या सा नारी पतिव्रता ज्ञेया । सर्वदा प्रसन्नवदना काले काले भोजनदायिनो भुक्तवन्तं भर्तारं प्रियवादिनो या न चोरयति अर्थात्तस्मान् न रक्षति गृहकर्मणि एव व्ययो करोति सा सती ज्ञेया ।

मासिके धर्मे जाते सति या दिनत्रयं यावत् गृहकार्यं न करोति, न किञ्चित् स्पृशति न स्वीयं मुखं दर्शयति एकान्ते निवसति च सा पतिव्रता भवति । यतो हि सा दिनत्रयं यावद् अस्पृश्या भवति[1] । सपत्नीभिः सह इर्ष्यारागमत्सरादिकमप्रियं च न करोति न भणति च सा परमा सती भवति निजवृद्धिं च वाञ्छति ।

पत्यौ देशान्तरे गते सति श्वश्रुश्वसुरयोः पार्श्वे शेते नान्यत्र । गृहकार्याणि विधाति बालं करोति । स्वप्नेऽपि कान्ताहितं नेच्छति न बहिर्द्वारावलोकनं करोति सा सती भवति । एकवस्त्रेणाटनं न करोति, एकाकी न कुत्रचिद् व्रजति भर्तृविद्वेषिणीभिर्न भाषते । व्रतादीनि च कान्ताज्ञां विना नाचरति । उक्ता न प्रत्युत्तरति विपरीतोत्तरं न ददातीत्यर्थः ।

---

1. प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ॥

देहल्यां मार्जिन्यां मुसले ऊखले दृषदि च सती नोपविशेत् । पत्यौ मृते सती या शुभ्रवसना एकाहारा, शरीरमण्डनविहीना भूमौ च शेते प्रत्यहं तर्पणं करोति सा परमा सती प्रोक्ता धर्मशास्त्रविशारदैः । इत्यादीनि पातिव्रत्यलक्षणानि समासेन प्रोक्तानि या नैवाचरन्ति ताः शूकरगृहगोधाश्रृगालयोनिमधिगच्छन्ति ।

एकत्रिंशेऽध्याये उमापृष्टो महादेवः किं दानं पुरुषोत्तमे उत्तमादुत्तमं दानं कथयस्व मे प्रभो ।

महादेवेन गिरिराजसुतायाः वचनं निशम्य प्रसन्नवदनेन कथितम् । पुरुषोत्तममासे त्रयस्त्रिंशत् पूपान्नानि त्रयस्त्रिंच्छिद्रसमन्वितानि कांस्यपात्रे सम्पुटितानि सप्ततन्तुभिर्वेष्टितानि ब्रह्मसम्पूर्तिहेतवे वेदविदुषे देयानि । अनेन दानेन ब्रह्माण्डदानवत् पुण्यं लभते नरो वा नारी वा ।

अस्मिन् पुरुषोत्तमे मासे परान्नं न भोक्तव्यम् । परशय्यायां न स्वपेत् नासत्यं सम्भाषयेत् । परनिन्दां च वर्जयेत् । वृथालापं त्यजेद् व्रती । इत्यादीनि नानाविधान्युपदेशवचनानि श्रीशङ्करेण शिवायै भणितानि ।



# अथपञ्चमोऽध्यायः

## वैदिकसाहित्ये पशुबन्धादीनां कर्मकाण्डविषयतया विमर्शः

[1]शतपथब्राह्मणस्यान्तिमचतुर्णां काण्डानां विषययोजना मूल-संहिताधारस्था वर्तते । एकादशे काण्डे पंशुबन्धस्य पञ्चमहायज्ञस्य दर्शपूर्णमासस्य विधानं च वर्णनमस्ति । भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेमे प्रख्यातयज्ञा महायज्ञरूपेणात्राङ्किताः । 11-5-6 स्वाध्यायो वेदस्याध्ययनं ब्रह्मयज्ञस्य रूपान्तरमिति । यस्यात्र 11-5-7 भूयसी प्रशंसा अलङ्कारिकशैल्या विहिता । ऋग्वेदस्याध्ययनं देवानां कृते पयस आहुतिरिति । यजुर्वेदस्य आज्याहुतिरिति सामस्य सोमाहुतिरिति । अथर्वाङ्गिरसं मेदाहुतिरिति कथितम् । तथा चानुशासन(वेदाङ्ग)विद्या वाको वाक्यं इतिहासः पुराण नाराशंसी' च गाथानामध्ययनं देवानां कृते मधोराहुतिरित्युक्ता ।

अतः शतपथस्य वेदस्य वेदाङ्गस्य चानुशीलनाय भूयांसो बलीयानाग्रहो वर्तते । अनेकैः प्रमाणैः' स्वाध्यायोऽध्येत्तव्यः' इत्यस्य समर्थनमस्य काण्डस्य महिमयः सिद्धान्तोऽस्ति । द्वादशकाण्डे सत्रस्य संवत्सरसत्रस्य सौत्रामणेरौर्ध्वदैहिकानुष्ठानस्य च सविस्तारं वर्णनं विहितम् । ये यज्ञाः आरम्भदिनतः द्वादशदिनानि यावत् प्रचलन्ति, ते क्रतवो यज्ञाः कथिताः । ये यज्ञा द्वादशदिनाधिकाः षाण्मासिकाः उत बहुवर्षाणि यावत् प्रचलन्ति, ते सत्रयज्ञाः उक्ताः । द्वादशाहो द्विविधः सत्रोऽहीनश्च - इति । द्वादशं सत्रः संवत्सरयज्ञश्च (वार्षिको यज्ञः) तदनन्तरं सौत्रमणिप्रख्यातयागस्य सविस्तरं वर्णनं

---



1. पृ. 224 तः 225 पृष्ठपर्यन्तम् ।

कृतम् । अस्मिन् यज्ञेऽऽध्यात्मिकरूपस्यापि वर्णनं विवेचनमधिकं मार्मिकं कृतम् (12-9-1) ।

त्रयोदशे काण्डेऽश्वमेधपुरुषमेधसवमेधपितृमेधानां विवरणमस्ति । मूर्धाभिषिक्ताः एव राजन्यः अश्वमेधस्यार्हा । अर्थात्तेषामेवाधिकारोऽश्वमेधयज्ञसम्पादने नान्यस्य । अश्वमेधः बहुदिनसाध्यो यागो यस्मिन् यज्ञीयाश्वस्य होमविधानं विद्यते । यज्ञ प्रसङ्गे - एषां यज्ञानां विशिष्टं वर्णनं विधेरपि ।

चतुर्दशे काण्डे प्रवर्ग्यवर्णनं वर्तते । अन्तिमेषु पञ्चाध्यायेषु चतुर्थाध्यायतो नवमाध्यायान्तं बृहदारण्यकोपनिषद् निबद्धा वर्तते । यासां वर्णनमुपनिषदां प्रसङ्गे वर्णयिष्यामि । एवंविधानां यज्ञानां नानाविधं विस्तृतं प्राञ्जलं प्रामाणिकरूपेण विवरणयितुं शतपथ-ब्राह्मणनामा ग्रन्थोऽद्वितीयो वर्तते । इत्थं कथने नास्ति कोऽपि सन्देहलेशो विप्रतिपत्तिश्च ।

### यज्ञानामाध्यात्मिकं तत्त्वम्

यज्ञकर्मणि नानाविधानि कर्माणि अनुष्ठानसमन्वितानि वर्तन्ते दृश्यन्ते च । तान्यपि विशिष्टक्रमेण सम्पन्नानि भवन्ति । क्रमोऽयं सयुक्तिकः ।

शतपथब्राह्मणे एवंविधक्रमसमन्वितस्य प्रत्येकपदार्थस्योपयोगितां प्रसाधयितुमतीवोदात्ता प्राञ्जला च विशिष्टा व्याख्या विहिता । तथ्यमेतद् वर्तते यद् भौतिकयागस्तु प्रतीतात्मको व्यापार इति । अन्तर्यागे बहिर्यागे पूर्णं सामञ्जस्यानुरूपं च वर्तते ।

समिद्धतमेऽग्नौ आहुतिद्वयं प्रदीयते । प्रथमा मनसेऽऽहुतिर्दीयते सा पूर्वाधाररूपाऽऽहुतिरिति कथ्यते । अपरा वाक्कृतेऽऽहुतिः प्रदीयते सा उत्तराऽऽधाररूपा इत्युच्यते । यथा भौतिकयज्ञं सञ्चालयितुं हयद्वयमावश्यकं भवति । तथैव यज्ञचक्रमाकर्षयितुं मनसो वाचश्चावश्यकता वर्तते । यदा मनः पूर्वं तावत् किञ्चिद्वस्तु सङ्कल्पयति इच्छति वा तस्य मनसो वचसश्च व्यापारेण

तत्प्रतिपादयति । मनो वाक्संयोगमन्तरा कस्यचिदपि कर्मणः सम्पादनं गगनकुसुममिव भवति । एवं हि यज्ञसदृशाध्यात्मकर्मणः यथार्थरूपेण सम्पादनसम्भवमिति । अनेनैवाभिप्रायेणाहुतिर्द्वयस्य निष्पत्तिर्भवति । एतदर्थं स्त्रुवान् स्त्रुजा च नाम्ना पात्रेणाहुतिः प्रदीयते । यतो हि - अस्मिन् विश्वस्मिन् प्रधानं तत्त्वद्वयं वर्तते । अग्निस्तत्त्वं सीमस्तत्त्वं च (अग्निसोमात्मकं जगत्) अग्निस्तु (आन्नादं पुरुष-तत्त्वम्) सोमस्त्वन्नं (उपभोग्यतत्त्वम् - स्त्रीतत्त्वं इत्यर्थः ) अनयो-र्द्वयोस्तत्त्वयोः सम्मिश्रणेनैव अर्थात् सामञ्जस्ये सति विश्वं कल्याणं सुसम्पन्नं सुसमीचीनं च भवति । अग्नौ सोमरसस्याहुतिप्रदानस्यैतदैं वांक्कृतं, यत् - आन्नादान्नयोः मिथः सम्बन्धेन जगन्मगल-साधिका सामग्री सम्प्रस्तुता सुसम्भवति । उपनिषत्सु - अपि इदमेव तत्त्वद्वयं रयिनाम्ना प्राणनाम्ना उल्लिखितमस्ति ।

अनुसन्धेयविषये वैष्णवस्वरूपप्रतिष्ठायै सकलकमर्णां न्यासः प्रमुखव्रतानामुपासनाप्रसङ्गे विहितो वर्ततेऽतस्तदर्थं श्रीवैष्णवत्व-सम्प्रतिष्ठायै सम्प्रदायानुसारमुपदेश आवश्यक इत्यवधार्य सोऽपि विर्मशनात्मनैव प्रस्तूयतेऽत्र ।

वस्तुतो यावद् वैष्णवत्वं वैष्णवानां कृते समुपास्यकर्मणां व्रतानां च प्राधान्यतया पालनप्रक्रिया न प्रोच्यते । तथा च विधिना व्रतानां निर्देशनं न क्रियते, तेषां कालनिर्णयव्रतविधिश्च नोच्यते, तत्रापि व्रतोपासनायां श्रद्धाभक्तिवर्धनाय पुराणोक्तानि प्रमाणभूतानि वचनानि न प्रदीयन्ते, तत्तद्व्रतोपासनादीनां पात्रतामुखेन प्रतिपादनं न क्रियते, तावत्कथमस्यानुसन्धेयविषयस्य साफल्यं सिद्ध्येत् ।

सन्ति विविधानि व्रतानि कर्तव्यानि तथापि विष्णुप्रीतिकराणि यानि वैष्णवैः समुपास्यानि तदनुसारमेवात्रैकादशी, रामनवमी श्रीकृष्णजन्माष्टमी वामनद्वादशी नृसिंहचतुर्दशी प्रभृतीन् विशेषतो वैष्णवानां कृते प्रमुखानि । अत एव पञ्चसंस्कारकाल एवाचार्यैः वैष्णवप्रदातृभिः प्रतिशिष्यं पञ्चसंस्काराङ्गतयैव तानि समुपदिश्यन्ते ।

एवं लब्धदीक्षाः वैष्णवाश्च स्वाचार्योपदेशेनात्मोद्धाराय तानि स्वरूपतः समुपासनाविधौ प्रवृत्ता भवन्ति । परमत्रापि केचन एव वैष्णवाः साङ्गोपाङ्गं व्रतानामुद्यापनविधिं यावत् सम्पादने आत्मानं धन्यम्मन्यमाना कृतार्थयन्ति ।

**श्रीवैष्णवोपदेशः**

श्रीवैष्णवाः परम्परया पञ्चसंस्कारदीक्षाविधानकाले शिष्येभ्यः शरणागतेभ्यः उपदिशन्ति यथाशास्त्रं यद्व्रतराज एकादशी श्रीराम-नवमी श्रीकृष्णाष्टमी श्रीनृसिंहचतुर्दशीश्रीवामनद्वादशीप्रभृतिव्रतानि सदा श्रद्धया समुपासितव्यानि इति । तेनेदं ज्ञायते यच्छ्रीवैष्णवानां कृते श्रौतस्मार्तप्रभृतियज्ञयागाद्यपेक्षयोक्तव्रतानां महत्त्वातिशयेन प्राधान्यम् । श्रीवैष्णवेषु देशप्रान्तकालपरिस्थित्यादिभेदेषु सत्सु यथाशक्यं यथाशक्ति श्रौतस्मार्तयज्ञांदिक्रिया कैश्चिदेव क्वचित् सुसम्पादिता सम्पाद्यते चापि साम्प्रतमपि न सर्वैरपि शक्यते सम्पादयितुम्, परन्तु साधारणसमर्थशालिनोऽशिक्षिताः शिक्षिताश्च सर्वेऽपि श्रीवैष्णवाः देशकालादिपरिस्थितिं प्रयोज्य विषमतायामपि प्राधान्यतया अवश्यमेव कर्तव्यतामनुभूय श्रीरामनवमी, श्रीकृष्णजन्माष्टमी, नृसिंहचतुर्दशी वामनद्वादशीव्रतानि प्रतिमासीयपक्षीयकृष्णशुक्लपक्षादिविचाराणां विनैव सर्वा अप्येकाशीतितिथयो व्रतरूपेणोपाषणियेति विचार्य व्रतपालनं कुर्वन्ति । एषामुक्तवतानां सम्यगुपासना विधिस्तत्तद्-व्रतानाञ्च निर्णयो विशेषरूपेण धर्मशास्त्रे पुराणादिषु कृतो दृश्यते । यथा प्रोक्तमगस्त्यसंहितायाम् —

चैत्रे नवम्यां प्राक् पक्षे दिवपुण्ये पुनर्वसौ ।<br>
उदये गुरुचन्द्रांशे स्वोच्चस्थे ग्रहपञ्चके ॥<br>
मेषं पूषणि सम्प्राप्ते ते लग्ने कर्कटाह्वये ।<br>
आवोरासीत् कलया कौशल्यायां परम्पुमान् ॥<br>
तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा ।<br>
तत्र जागरणं कुर्यात् व्रतपूर्वैः सदा नरः ॥

चैत्रशुद्धे तु नवमी पुनर्वसुवृक्षसंयुक्ता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥
चैत्रमासनवम्यां तु जातो रामः स्वयं हरिः ।
पुनर्वसृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥
श्रीरामनवमी प्रोक्ता सा तु कोटिग्रहाधिका ।
केवलापि सदोपोष्या नवमीसङ्ग्रहात् ॥
तस्मात् सर्वात्मना सर्वै कार्यं तन्नवमीव्रतम् ॥

तत्रैवागस्त्यसंहितायां श्रीवैष्णवानां कृते नवमीव्रतस्य सुनिर्णयोऽपि कृतः —

नवमी चाष्टमी विद्धा त्याज्या विष्णुनारायणैः ।
उपोषणन्तु कुर्यात् दशम्यां चैव पारणम् ॥
वैष्णवानां विशेषस्तु तत्र विष्णुपरैरपि
दशम्यादिषु वृद्धिश्चेद् विद्धा त्याज्यैव वैष्णवैः ॥

वैष्णवेतराणां कृते तु — तदन्येषान्तु सर्वेषां व्रतं तत्रैव निश्चितम् ।

इति वदन् यदा प्रातस्त्रिमुहूर्ता नवमी दशमी क्षयं वशात् ।
सूर्योदयात् प्रागेव सम्प्राप्यते तदा स्मार्तानां तत्रैवैकादशी ॥
नवमो निमित्तोपवासनान्नवमी व्रताङ्गपारणालोपः स्यात् ।
तेनाष्टमी विद्धैव स्मार्तैः कार्या इति विशेषो वैष्णवव्रतापेक्षया ॥
श्रीवैष्णवानामरुणोदयविद्धैकादश्या हेयत्वात् न पारणा लोपः ।

प्रसङ्गः इति द्वितीयैव कार्येति सूच्यते । दशमीवृद्ध्यभावे अष्टमी-विद्धायाः क्षये च वैष्णवैरपि विद्धैवोपोष्येति । व्रतंमिदं संयोगपृथ-क्त्वन्यायेन काम्यं नित्यं च यथोक्तमपि हेमाद्रावगस्त्यसंहितायाम् —

उपोषणं जागरणं पितृनुदिश्य तर्पणम् ।
तस्मिन् दिने तु कर्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः ॥
सर्वेषामप्ययं धर्मो भुक्तिमुक्त्यैकसाधकः ।
अशुचिर्वापि पापिष्ठः कृत्वेदं व्रतमुत्तमम् ॥

पूज्यः स्यात् सर्वभूतानां यथारामस्तथैव सः ।
यस्तु रामनवम्यान्तु भुङ्क्ते मोहाद् विमूढधीः ॥
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ।
अकृत्वा रामनवमीव्रतं सर्वोत्तमोत्तमम् ॥
व्रतान्यान्यानि कुरुते न तेषां फलभाग् भवेत् ।
इत्थमुक्तप्रमाणेन नवमीव्रतविधानमतिरिच्यते व्रतेभ्यः ॥

व्रतनियमविशेषो वैष्णवानां तत्रैवोक्तम् —

आचार्यं चैव सम्पूज्य वृणुयात् प्रार्थयन्निशि ।
श्रीरामप्रतिमादानं करष्येिऽहं द्विजोत्तम ॥
भक्त्याचार्यो भवप्रीतः श्रीरामोऽसि त्वमेव नः ।

तथा च स्वगृहे चोत्तरस्यां दिशि धान्योपरि मण्डपम् । यथा वचनमत्रापि —

स्वगृहे चोत्तरे देशे धान्योपरि मण्डपम् ।
शङ्खचक्रहनूमद्भिः प्राग् द्वारे समलङ्कृतम् ॥
गरुत्मच्छार्ङ्गव्यापैश्च दक्षिणे समलङ्कृतम् ।
गदाखड्गाङ्गदैश्चैव पश्चिमे सुविभूषितम् ॥
पद्मस्वस्तिकनीलैश्च कौवेरे समलङ्कृतम् ।
मध्यं हस्तचतुष्काण्डात्र वेदिकामुत्तमोत्तमाम् ॥
ततः सङ्कल्पयेद् देवं राममेव स्मरन् द्विजः ।
रामनवम्यां च समाराधनतत्परः ॥
उपोष्याष्टसु यागेषु पूजयित्वा यथाविधिः ।
इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः ॥
श्रीरामप्रीतये दास्ये रामभक्ताय श्रीमते ।
प्रीतो रामः हरत्वाशु पापानि सुबहूनि मे ।
अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ॥
ततः स्वर्णमयीं रामप्रतिमां च प्रयत्नतः ।

**निर्मितां द्विभुजां दिव्यां वामाङ्गस्थितजानकीम् ॥**
**बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने ।**
**वामेनाथ करेणायं देवीमालिङ्ग्य संस्थिताम् ॥**
**सिंहासने राजतेऽत्र पलद्वयनिर्मिते ।**

यदि तथाविधप्रतिमादिविधिसम्पादनेऽसमर्थश्चेत्तर्हि-

**अशक्तो यो महाभाग भक्त्या वित्तानुसारतः ।**
**पलेनार्धपलेनाथ तदर्धेन वा पुनः ॥**
**सोवर्णं राजतं वापि कारयेद् रघुनन्दनम् ।**
**पार्श्वे भरतशत्रुघ्नौ धृतछत्रकरावुभौ ॥**
**चापद्वयसमायुक्तं तं लक्ष्मणं चापि कारयेत् ।**
**दक्षिणाङ्गे दशरथं पुत्रावेक्षणतत्परम् ॥**
**मातुरङ्कगतरामिन्द्रनीलसमप्रभम् ।**
**पञ्चामृतस्नानपूर्वं सम्पूज्य विधिवत्ततः ॥**

एवमुक्तरीत्या रामनवमीव्रतकर्तृणां श्रीवैष्णवानामन्येषामपि यथाशक्तिव्रतनियमपालनमुक्तम् । तत्र कौशल्यामन्त्रः —

**रामस्य जननीश्चापि शररूपमिदं जगत् ।**
**अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते ॥**

तत्रैव पितुः कृतेऽपि —

नमो दाशरथायेति पितरं (ततः) तत्र रामाय पाद्यपूजा-क्रमः —

**अशोककुसुमैर्युक्तमर्घ्यं दद्याद् विचक्षणः ।**
**दशाननवधार्थाय धर्मं संस्थापनाय च ॥**
**परित्राणाय साधूनां जातो रामः स्वयं हरिः ।**
**गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ॥**

पुष्पाञ्जलिं पुनर्दत्वां यामे यामे प्रपूजयेत् ॥
दिवैव विधिवत्कृत्वा रात्रौ जागरणं ततः ।
ततः प्रातः समुत्थाय स्नानसन्ध्यादिकाः क्रियाः ॥
समाप्य विधिवद् रामं पूजयेद् विधिवन्मुने ।
ततो होमं प्रकुर्वीत् मूलमन्त्रेण मन्त्रवित् ॥
पूर्वोक्तपद्मकुण्डे वा स्थण्डिले वा विधानतः ।
लौकिकाग्निविधानेन शतमष्टोत्तरं शतम् ॥
साज्येन पायसेनैव स्मरन् रामन्यधीः ।
ततो भक्ता सुसन्तुष्टः आचार्यं पूजयेन्मुने ॥
इमां स्वर्णमयीं रामप्रतिमां समलङ्कृताम् ।
चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ॥
श्रीरामप्रीतये दास्ये तुष्टो भवति राघवः ॥
इति दत्वा विधानेन दद्याद् वे दक्षिणामकम् ॥
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥

यथाशक्तिपूजाविधिरपि सामान्यजनहितायागस्त्यसंहिता-यामेवोक्तः —

सम्पूज्य विधवद् रामं भक्त्या शक्त्यानुसारतः ।
ब्राह्मणान् भोजयेद् भक्त्या दक्षिणाभिश्च तोषयेत् ॥
गोभूतिल हिरण्याद्यैर्वस्त्रालङ्कारभूषणैः ।
रामभक्तः प्रयत्नेन प्रीणयेत् परमा मुदा ॥
एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतम् ।
अनेकजन्मसिद्धानि पातकानि बहूनि च ॥
भस्मीकृत्य व्रजत्येव तद्विष्णोः परमं पदम् ।
बहुना किमुक्तेन मुक्तिस्तस्य करे स्थितः ॥
कुरुक्षेत्रे महापुण्ये सूर्यपर्वण्यनेकशः ।
तुलापुरुषदानाद्यैः कृतैर्यल्लभते फलम् ॥
तत्फलं लभते मर्त्यो दाननानेन सुव्रत ॥

न केवलं सर्वसाधनसम्पन्नानामेव कृते व्रतमिदं परन्त्व-किञ्चनानामपि कृते व्रतविधिरत्र विशेषतः उक्तः, यथा—

**अकिञ्चनोऽपि नियत उपोष्य नवमीदिने ।**
**कृत्वा जागरणं भक्त्या मम भक्तिसमन्वितः ॥**
**स्मरन् नामधिया भक्त्या पूजयेद् विधिवन्मुने ।**
**जपन् राममनुर्माया रामनामसमन्वितम् ॥**

अत्राप्यशक्तो उपवासमात्रं कृत्वा किञ्चिद् रामाराधनं कुर्यात् ॥

अत्र नवमीप्रभृतिजयन्ती स्वरूपोत्सवान्तपारणा निर्णयः । अवैष्णवसम्प्रदाये प्रोक्तः । यथा वशिष्ठसंहितायाम् —

**वक्ष्यामि देवदेवस्य रामजन्मदिनोत्सवम् ।**
**पुनर्वसौ कुर्यात् चैत्रनवमिके तिथौ ॥**

एवं विष्विक्सेनसंहितायाम् —

**राघवस्यैव वक्ष्यामि तथा जन्मदिनक्रियाम् ।**
**ऋक्षे पुनर्वसौ कुर्यात् चैत्रे नवमिके तिथौ ॥**

श्रीपराशरधर्मशास्त्रेऽपि —

**मासि चैत्रे शुक्लपक्षे नवम्याञ्च पुनर्वसौ ॥**

वशिष्ठस्मृतौ षष्ठेऽध्याये —

**मासि चैत्रे शुक्लपक्षे नवम्यान्तु पुनर्वसौ ।**
**कौशल्यायां समुत्पन्नो विष्णुकाकुत्स्थ ईरितः ॥**

पाद्मे चर्यापादे —

**चैत्रमासि पुनर्वस्योर्जन्म राम मङ्गलम् - इत्यादि ।**

शुक्लनवम्यामेव श्रीरामजन्मदिनत्वेन ग्राह्या । यद्यपि —

**ततश्च द्वादशे मासि चैत्रे नावमिके तिथौ ।**
**नक्षत्रे दितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥**

**ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ।**
**प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।**
**कौशल्याऽजनयद् रामं सर्वलक्षणसंयुतम् ॥**

इति रामायणवचने – उच्चसंस्थेषु पञ्चसु इत्यत्र सूर्यस्यापि उच्चसंस्थपञ्चग्रहान्तर्गतत्वेन मेषशुक्लनवमीति प्रतीयते । तथापि चैत्रशुक्लनवम्याः मीने मेषे च सम्भाव्यमानतया श्रीरामावतारकाले रवेर्मेषसम्भावितत्वात् तथोक्तबाल्मीकिमहर्षिणा उच्चसंस्थेषु पञ्चसु इति, तस्माच्चैत्रशुक्लनवम्यां तिथौ व्रतानुष्ठानस्य नानुपपत्तिः । नन्ववतारकालस्य मेषशुक्लनवमीत्वात् – तादृशदिनस्यैव व्रता-नुष्ठानकालतया मेषशुक्लनवम्यामेवोत्सवः कार्य इति चेत् सत्यमेव, तद्दिनस्य पुंनर्वसुयुतत्वाच्च ग्रहपञ्चकत्वे सेन्दुबृहस्पतिकत्वकथनात् तादृग्गुणविशिष्टदिनस्योत्सवकर्त्तव्यतया तादृशदिनस्येदानीं दुर्लभतया उत्सवानुष्ठानं न भवेत् । तस्मादेव कारणात् मीने मेषे वा यथासम्भवं चैत्रशुद्धे नवम्यैव व्रतदिनत्वेनावधारिता सापि नवमी श्रीवैष्णवैर्वेध-रहितैव ग्राह्या विद्धायाः सुतरां निषिद्धत्वात् । निषेधवचनानि पाद्मे यथा –

**अष्टम्यां नवमीविद्धा त्रिमुहूर्तं यदा भवेत् ।**
**तदापरे द्युरेवेयं स्थिता ग्राह्या तु वैष्णवैः ॥**

अगस्त्यसंहितायामपि —

**नवमी चाष्टमी विद्धा त्याज्या विष्णुपारयणैः ।**

स्कन्धेऽपि – पुनर्वसुयुता रामनवमी यदि षण्मुख त्रिमुहूर्ते विद्याच्चेन्न ग्राह्या विष्णुतत्परे इत्यादि वचनैरेवेवानुगम्यते परेद्युरुद-यानन्तरं कलामात्रनवम्यां मानेऽभावेऽपि दशम्यामेवोत्सवः ।

अनिरुद्धसंहितायां श्रीवैष्णवानां कृते तिथ्यन्तपारणापेक्षयो-त्सवान्ते पारणाव्यवस्था प्रोक्ता विद्यते. यथा —

**जयन्तीनां सर्वासामुत्सवान्तानुपारणम् ।**
**कर्त्तव्यमैहिककामैः पञ्चकालपरायणैः ॥**

एवं संहितान्तरेऽपि च तिथ्यन्ते पारणं कार्यम् —

**तत्रत्यफलमभीप्सता ।**

**उत्सवान्ते तु तत्कार्यं न्यस्तात्मभिरेश्वर ।**

एवं जयत्सेनसंहितायाम् —

**तिथ्यन्ते वाथ भान्ते वा ह्युत्सवान्ते तु पारणम् ।**
**मुमुक्षुणामकामनामुत्सवान्ते तु पारणम् ॥**
**काम्यार्थिनामशेषेण परेद्युः खलुं पारणम् ॥**

एवं सुमन्तोरपि वचनम् —

**तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ।**
**अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात् ।**
**पारणामुत्सवान्ते तु कुर्युरेकान्तिनो हि ये ॥**

इत्यादिवचनैश्चात्र शुद्धनवम्यां कर्कलग्नं श्रीरामजयन्तीविशेषाराधनं कृत्वा आराधनान्ते पारणं मुमुक्षुभिः कार्यम् ।

**यस्तु रामनवम्यान्तु भुङ्क्ते मोहविमूढधीः ।**
**रौरवं नरकं प्राप्य वर्तते कल्पकोटिकम् ॥**
**ब्रह्महत्यादिपापानां दृष्टा शास्त्रेषु निष्कृतिः ।**
**रघुनाथनवम्यान्तु भोक्तृणां नास्ति निष्कृतिः ॥**
**मासि चैत्रे शुक्लपक्षे नवम्यां च पुनर्वसौ ।**
**तस्यां जातो जगन्नाथः काकुत्स्थो हरिरच्युतः ।**
**तस्यामुपोष्य विधिवत् स्नात्वा पूजयेद्धरिम् ॥**

इत्यादिवचनैः श्रीरामनवम्यामुपवास एव कार्यः - इति चेत्, न । मुमुक्षुणामकामानां वचनं मुमुक्षुविषयत्वेन यस्तु रामनवम्यामित्युपवासपरः सामान्यवचनमुत्सर्गाय वादन्यायेनाऽमुमुक्षुविषयत्वात् न च जयन्तीनान्तु सर्वासामित्यादिवचनानां जयन्तीसामान्यविषयत्वेन यस्तु रामनवम्यामित्यादिवचनानां जयन्तीविशेषविषयत्वे उत्सर्गापवादन्यायेन

श्रीरामनवम्यामुत्सवान्तपारणया बाधा इति वाच्यम् । पूर्वोक्तवचनानां जयन्तीसामान्यविषयत्वेऽपि अधिकारी विशेषविषयत्वेनैतेषान्तु वचनानां जयन्तीविषयत्वेऽपि अधिकारिसामान्यविशेषविषयत्वादि-धिकारिविशेषविषयकवचनान्तरामावाच्यमुमुक्षुविषये उत्सवान्तपारा-णाया उपवासपूर्वकत्वात् श्रीरामनवम्यामहोरात्रोपवासस्याहरुप-वासस्य वासम्भवादुत्सवान्तपारणं कथं सङ्गच्छते इति वाच्यम् । अत्राप्युपवासपूर्वकत्वस्याक्षतेः कथमिति चेद् अहरुपवासरात्र्युपवास अहोरात्रोपवासादिषु अनुगतस्योपवासशब्दप्रवृत्तिनिमित्तस्य वक्तव्य-तया तेष्वहर्भोजननिवृत्तित्वादेननुगततया सर्वत्रानुगतं प्रवृत्तिनिमित्तं किञ्चिदास्थेयम् । तच्च किमित्यपेक्षायां या भोजननिवृत्तिस्तत्त्वमेवेति वक्तव्यम् । नान्यत् किञ्चिदुच्यते तथा च श्रीरामनवम्यामपि तादृश-धर्मावच्छिन्नोपवासस्योत्सवान्तपर्यन्तसद्भावात् पारणाया - उप-वासपूर्वकत्वमक्षतमेव । अत एव तिथ्यन्तभान्तपारणयोरप्युपपूर्व-कत्वमुमपन्नं भवतीति । यद्युच्यते मुमुक्षुणामुत्सवान्ते पारणाया अप्युपवासपूर्वकत्वोपपादनात् - मुमुक्षुणामकामानामित्यादि उत्स-वान्तपारणविधायकवचनैरुपोषणं जागरणं तस्मिन् कुर्याद् विशेषतः इत्याद्युपवासविधायकवचनानां मुमुक्षुविषयत्वेन व्यवस्था-पनमसङ्गतमिति चेन्न, जागरणादिनियमसहिताहोरात्रोपवासस्या-मुमुक्षुविषयवचनगतोपवासशब्दार्थत्वेनासङ्गत्यापादनस्यैवास-ङ्गतत्वात् न किञ्चिदपि हीनमत्र ।

**अथ वामनद्वादशीव्रतव्यवस्थाविमर्शः**

मात्स्ये, यथा —

> **शेते विष्णुः सदाषाढे भाद्रे तु परिवर्तते ।**
> **कार्तिके प्रतिबुद्ध्येत् शुक्लपक्षे हरिदिने ॥**

एवं कालादर्शे —

> **आषाढी शुक्लषष्ठी तु तिथिकौमारिला स्मृता ।**
> **तत्रैव शुक्लद्वादश्यां निद्राति भगवान् हरिः ॥**

स भाद्रपदमासे तु तत्रैव परिवर्तते —

**तयोरभ्यर्च्य गोविन्दं विदधीत महोत्वसम् ।**
**ते मैत्रश्रवणोपेते पावने परिकीर्तिते ॥**

एवं स्कन्धेऽपि —

**भाद्रे तु द्वादशी शुक्ला श्रवणार्क्षसमन्विता ।**
**महती कीर्तिता तस्यां वामनं पूजयेन्नरः ॥**

मात्स्येऽपि

**द्वादश्यां भाद्रशुक्ले तु नक्षत्रं श्रवणं यदि ।**
**उपोष्य द्वादशीं तत्र हरिमभ्यर्चयेन्नरः ॥**
**भाद्रे तु शुक्लद्वादश्यां नक्षत्रं श्रवणं यदि ।**
**श्रवणद्वादशी प्रोक्ता सा नाम मुनिपुङ्गवैः ॥**

अत्र द्वादश्यां यत् किञ्चित् श्रवणयोगेऽपि सर्वा द्वादशी पुण्या । नारदेऽपि श्रवणद्वादशीं प्रकृत्य —

**तिथिनक्षत्रयोर्योगो यश्चैव नराधिप ।**
**द्विकालो यदि लभ्येत संज्ञेयो त्वाष्टयामिकः ॥**

विष्णुपुराणे—

**या काश्चित्तिथयः प्रोक्ताः पुण्याः नक्षत्रयोगतः ।**
**तास्वेव तद् व्रतं कुर्यात् श्रवणद्वादशीं विना ॥**
**कृत्यकादिभरण्यन्तं वारं वा रविसप्तकम् ।**
**नेते संयोगमात्रेण पुनन्ति सकलां तिथिम् ॥**

एवमेव जयन्तीनामपि श्रीरामश्रीकृष्णश्रीनृसिंहश्रीवामनप्रभृतीनां कालनिर्णयपुरस्सरमुपासना तिथिः समर्चना विधिरुद्यापनविधिश्च यथाशास्त्रमेव विस्तृतया प्रतिपादितं श्रीवैष्णवपुराणेष्वागमेष्वपि च भूयांसि वचनानि प्रमाणरूपेणोपलब्धानि विस्तरभयान्नात्रोपस्थाप्यन्ते ।

## श्रीवैष्णवानां श्राद्धविधनम्

पूर्वदिने[1] तीर्थस्नानविधिना स्नात्वा भगवत्समाराधनादिना पवित्रीकृतं, सात्त्विकाहारं सकृद्भुक्त्वा सायंकाले महाभागवत-ब्राह्मणाऽऽमन्त्रणं वासुदेवादिनामभिः कुर्यात् । अत्रायं प्रकारः तेषु ताम्बूलादिकं समर्प्य — "भो वासुदेवस्वरूपिणो महाभाग-वताऽचार्याः[2] ? श्वोदिने करिष्यमागपितृस्वरूपिभगवत्समाराधन-कर्मणि भवन्तो मया आमन्त्रिता अभिवादये । भो इत्युच्चार्य साष्टाङ्ग-प्रणामं कुर्यात् । स्वगृहमागत्याधःशायी भवेत् । श्राद्धदिने नित्य-कर्माणि विधाय ऊर्ध्व[3]पुण्ड्रादिकं कृत्वा तदनन्तरं पञ्चभूसंस्काराः कार्याः । पूर्वं दर्भैः मण्डलपरिसमूहनं कार्यम्, गोमयेनोपलेपनम्, दर्भमूलेन वेद्यां रेखात्रयकरणम् । अनामिकाङ्गुष्ठाभ्यां मृदमुल्लेखनं क्रमेणोधृत्य ऐशान्यां क्षिपेत् । शुद्धजलेन प्रोक्षणम् । गौर-सर्षपैर्दिग्रक्षणम् । पूर्वे रक्षतु गोविन्द आग्नेय्यां गरुडध्वजः इत्यादि । तदनन्तरं भूपूजनं भवति । आवाहनं - आगच्छ सर्वकल्याणि वसुधे लोकधारिणि इत्यादि । ओं भूरसि इत्यादिना मन्त्रेण भूपूजनम् । अथ वराहपूजनं - ओं वाराहाय नमः ।

वराहपूजनानन्तरं विष्वक्सेनपूजनं भवति । देशकालादिक-मुच्चार्य्य अमुकगोत्रस्य अमुकस्य मम पितृस्वरूपिणः श्री-मन्नारायणस्य समाराधनं विष्वक्सेनविश्वेदेवपूजनपूर्वकं करिष्ये[4] ।

तदनन्तरं वैदिकमन्त्रैः कलशस्थापनादिकं कार्यम् । तदनन्तरं विष्वक्सेनं परितोऽष्टदिक्षु तत् पार्षदानामावाहनादिकं कार्यम् । यथा— ईशाने ओं गजाननाय नमः, आग्नेय्यां जगत्सेनाय नमः । नैऋते ओं हं

---

1. वैकुण्ठचन्द्रिका, पृ. - 39.
2. वासुदेव सङ्कर्षण प्रद्युम्न अनिरुद्ध ।
3. स्मार्तेषु श्राद्धात् पूर्वं गन्धधारणं निषिद्धम् ।
   ललाटे तिलकं दृष्ट्वा निराशाः पितरः गताः ॥
4. विवाहसमये एभिः पौराणिकमन्त्रैः स्मार्ताः वररक्षण आचार्याः कुर्वन्ति ॥

हरिमुखाय नमः, वायव्ये ओं कं कालप्रवृतये नमः । पूर्वे ओं वं बलाय नमः । दक्षिणस्यां ओं प्रं प्रबलाय नमः । पश्चिमायां विं विनायकाय नमः । उत्तरे विष्वक्सेनाय नमः । ओं विष्वक्सेनाय विद्महे वेत्रहस्ताय धीमहि तन्नो सेनेश प्रचोदयात्[1] ।

तदनन्तरं विश्वेदेवपूजनं भवति तत्तु स्मार्तानां सदृशमेव । तदनन्तरं कुशजलादिकमादाय ओं अद्यामुक गोत्रस्य, अमुकनाम्नः अस्मत् पितुः अस्मिन् श्राद्धकर्मणि वासुदेवादीनावाहयिष्ये ।

ततः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धानां ध्यानं विधेयम् । अर्घ्यादिकं सम्पाद्य सव्येन देवतीर्थेन च पूजयेत् । अथाद्यामुकगोत्रस्य अमुकस्य मम पितुरस्मिन् श्राद्धे वासुदेवादयः वः अर्घ्यं नमः । होमादिकं विधेयम् । तत्तु सर्वं स्मार्तसदृशमेव । परन्तु वैष्णवाः अग्नेः गर्भाधानादयः षोडशसंस्कारान् कुर्वन्ति । स्मार्ता तु नैव कुर्वन्ति इति वैशिष्ट्यम् ।

पुष्पाञ्जलिमादाय अग्निं प्रार्थयेत् —

**चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**
**हूयते च पुनर्द्वाभ्यां तस्मै ज्ञानात्मने नमः ।।**

ततो मूलमन्त्रेण घृतपायसाभ्यां अष्टोतरशतं द्वयमन्त्रेण पञ्चविंशतिवारं द्वादशवारं वा जुहुयात् —

1- ओं केशवाय नमः स्वाहा ।
2- ओं नारायणाय नमः स्वाहा ।
3- ओं माधवाय नमः स्वाहा ।
4- ओं गोविन्दाय नमः स्वाहा ।
5- ओं विष्णवे नमः स्वाहा ।
6- ओं मधुसूदनाय नमः स्वाहा ।

1. स्मार्ता पूर्वं विश्वेदेवपूजनं भावनादिकं कुर्वन्ति तदनन्तरं पितृपूजनमावाहनं च कुर्वन्ति । अस्मिन् कर्मणि केचित् पुण्याहवाचनमिच्छन्ति । केचिन्नेच्छन्ति ।

7- ओं त्रिविक्रमाय नमः स्वाहा ।
8- ओं वामनाय नमः स्वाहा ।
9- ओं श्रीधराय नमः स्वाहा ।
10- ओं हृषीकेशाय नमः स्वाहा ।
11- ओं पद्मनाभाय नमः स्वाहा ।
12- ओं दामोदराय नमः स्वाहा ।
13- ओं वासुदेवाय नमः स्वाहा ।
14- ओं सङ्कर्षणाय नमः स्वाहा ।
15- ओं प्रद्युम्नाय नमः स्वाहा ।
16- ओं अनिरुद्धाय नमः स्वाहा ।
17- ओं पुरुषोत्तमाय नमः स्वाहा ।
18- ओं अधोक्षयाय नमः स्वाहा ।
19- ओं नारसिंहाय नमः स्वाहा ।
20- ओं अच्युताय नमः स्वाहा ।
21- ओं जनार्दनाय नमः स्वाहा ।
22- ओं उपेन्द्राय नमः स्वाहा ।
23- ओं हरये नमः स्वाहा ।
24- ओं श्रीकृष्णाय नमः स्वाहा ।
25- ओं श्रीदेव्यै नमः स्वाहा ।
26- ओं भूदेव्यै नमः स्वाहा ।
27- ओं नीलादैव्ये नमः स्वाहा ।

ततो वैकुण्ठपार्षदहोमो भवति । यथा—

1- ओं आधारशक्त्यै नमः स्वाहा ।
2- ओं प्रकृत्यै नमः स्वाहा ।
3- ओं अखिलजगदाधारकूर्मरूपिणे नमः स्वाहा ।
4- ओं नारायणाय नमः स्वाहा ।

5- ओं अनन्ताय नागराजाय नमः स्वाहा ।

6- ओं भूम्यै नमः स्वाहा ।

7- ओं वैकुण्ठाय दिव्यलोकाय नमः स्वाहा ।

8- ओं वैकुण्ठाय दिव्यजनपदाय नमः स्वाहा ।

9- ओं वैकुण्ठाय दिव्यनगराय नमः स्वाहा ।

10- ओं वैकुण्ठाय दिव्यविमानाय नमः स्वाहा ।

11- ओं आनन्दमयाय दिव्यमण्डपरत्नाय नमः स्वाहा ।

12- ओं आस्तरणरूपिणेऽनन्ताय नागराजाय नमः स्वाहा ।

13- ओं धर्माय पीठपादाय नमः स्वाहा ।

14- ओं ज्ञानाय पीठपादाय नमः स्वाहा ।

15- ओं वैराग्यपीठपादाय नमः स्वाहा ।

16- ओं ऐश्वर्याय पीठपादाय नमः स्वाहा ।

17- ओं ऋग्वेदाय पीठवाहकाय नमः स्वाहा ।

18- ओं यजुर्वेदाय नमः स्वाहा ।

19- ओं सामवेदाय नमः स्वाहा ।

20- ओं अर्थववेदाय नमः स्वाहा ।

21- ओं अधर्माय पीठगात्राय नमः स्वाहा ।

22- ओं अज्ञानाय पीठगात्राय नमः स्वाहा ।

23- ओं अवैराग्याय पीठगात्राय नमः स्वाहा ।

24- ओं अनैश्वर्याय नमः स्वाहा ।

25- ओं एभिः परिच्छिन्नतनवे नमः स्वाहा ।

26- ओं सदसदात्मकाय पीठभूताय नागराजाय नमः स्वाहा ।

27- ओं पीठस्योपरि अष्टदलपद्माय नमः स्वाहा ।

28- ओं सोममण्डलाय नमः स्वाहा ।

29- ओं सूर्यमण्डलाय नमः स्वाहा ।

30- ओं वह्निमण्डलाय नमः स्वाहा ।



31- ओं विमलायै चामरकरायै नमः स्वाहा ।

32- ओं उत्कषाण्यै चामरकरायै नमः स्वाहा ।
33- ओं क्रियायै नमः स्वाहा ।
34- ओं ज्ञानायै नमः स्वाहा ।
35- ओं प्रहव्यै नमः स्वाहा ।
36- ओं सत्याय नमः स्वाहा ।
37- ओं ईशानायै नमः स्वाहा ।
38- ओं योगायै नमः स्वाहा ।
39- ओं अनुग्रहायै नमः स्वाहा ।
40- ओं जगत्प्रकृतये योगपीठवाहकाय नमः स्वाहा ।
41- ओं सहशीर्ष्णे अनन्ताय नमः स्वाहा ।
42- ओं पुरुषपादपीठाय नमः स्वाहा ।
43- ओं भगवत्पादुकाभ्यां नमः स्वाहा ।
44- ओं अस्मद् गुरुभ्यो नमः स्वाहा ।
45- ओं अस्मत्परमगुरुभ्यो नमः स्वाहा ।
46- ओं अस्मत्सर्वगुरुभ्यो नमः स्वाहा ।
47- ओं श्रीमते रामानुजाय नमः स्वाहा ।
48- ओं पूर्णमिश्राय नमः स्वाहा ।
49- ओं श्रीमद्यामुनमुनये नमः स्वाहा ।
50- ओं श्रीराममिश्राय नमः स्वाहा ।
51- ओं पुण्डरीकाक्षाय नमः स्वाहा ।
52- ओं श्रीमन्नाथमुनये नमः स्वाहा ।
53- ओं श्रीशठकोपाय नमः स्वाहा ।
54- ओं श्रीमते नमः स्वाहा ।
55- ओं विष्वक्सेनाय नमः स्वाहा ।
56- ओं श्रियै नमः स्वाहा ।
57- ओं श्रीधराय नमः स्वाहा ।
58- ओं सुदर्शनहेतिराजाय नमः स्वाहा ।

59- ओं पाञ्चजन्याय शङ्खाधिपतये नमः स्वाहा ।

60- ओं कौमोदक्यै गदाधिपतये नमः स्वाहा ।

61- ओं नन्दकाय खड्गाधिपतये नमः स्वाहा ।

62- ओं शार्ङ्गाय चापाधिपतये नमः स्वाहा ।

63- ओं श्रीवत्साय श्रीनिवासाय नमः स्वाहा ।

64- ओं कौस्तुभाय सर्वरत्नाधिपतये नमः स्वाहा ।

65- ओं श्रीबैजयन्त्यै वनमालायै नमः स्वाहा ।

66- ओं ह्रीं पुष्ट्यै नमः स्वाहा ।

67- ओं ऐं सरस्वत्यै नमः स्वाहा ।

68- ओं द्रां निद्रायै नमः स्वाहा ।

69- ओं क्लीं कान्त्यै नमः स्वाहा ।

70- ओं कं पृथिव्यै नमः स्वाहा ।

71- ओं गं गरुडाय नमः स्वाहा ।

72- ओं किरीटाय मुकुटाधिपतये नमः स्वाहा ।

73- ओं किरीटमालायै आपीडात्मकायै नमः स्वाहा ।

74- ओं मकराकृतिकुण्डलाभ्यां नमः स्वाहा ।

75- ओं कण्ठिकाभरणाय नमः स्वाहा ।

76- ओं श्रीमत्तुलस्यै नमः स्वाहा ।

77- ओं हाराय सर्वाभरणाधिपतये नमः स्वाहा ।

78- ओं काञ्चीगुणोज्वलाय नमः स्वाहा ।

77- ओं काञ्चीगुणोज्वलाय पीताम्बराय नमः स्वाहा ।

78- ओं सर्वेभ्यो भगवद्भूषणेभ्यो नमः स्वाहा ।

70- ओं सर्वेभ्यो भगवद्दिव्यायुधेभ्यः नमः स्वाहा ।

80- ओं सर्वाभ्यो भगवत्पादसंवाहिनीभ्य नमः स्वाहा ।

81- ओं सर्वेभ्यो भागवतंपरिकरेभ्यः नमः स्वाहा ।

82- ओं अनन्ताय नमः स्वाहा ।

83- ओं विष्वक्सेनाय नमः स्वाहा ।

84- ओं सूत्रवत्यै नमः स्वाहा ।

85- ओं जं जयत्सेनायै नमः स्वाहा ।

86- ओं गं गजाननाय नमः स्वाहा ।

87- ओं हं हयाननाय नमः स्वाहा ।

88- ओं कं कालप्रकृतिसँज्ञाय नमः स्वाहा ।

89- ओं सर्वेभ्यो विष्वक्सेनपरिजनेभ्यः नमः स्वाहा ।

90- ओं चण्डाय नमः स्वाहा ।

91- ओं प्रचण्डाय नमः स्वाहा ।

92- ओं भद्राय नमः स्वाहा ।

93- ओं सुभ्रदाय नमः स्वाहा ।

94- ओं जयाय नमः स्वाहा ।

95- ओं विजयाय नमः स्वाहा ।

96- ओं धात्रे नमः स्वाहा ।

97- ओं विधात्रे नमः स्वाहा ।

98 ओं कुमुदाय सपरिवाराय सशक्तिकाय नमः स्वाहा ।

99- ओं कुमुदाक्षाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा ।

100- ओं पुण्डरीकाय सायुधाय सपरिवाराय शशक्तिकाय नमः वाहा ।

101- ओं वामनाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा ।

102- ओं शङ्कुकर्णाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा ।

103- ओं सर्पनेत्राय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा ।

104- ओं सुमुखाय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वाहा

105- ओं सुप्रतिष्ठिताय सायुधाय सपरिवाराय सशक्तिकाय नमः स्वहा ।

106- ओं सर्वेभ्यो भगवद्गणाधिपतिभ्यो नित्येभ्यो नमः स्वाहा ।

107- ओं नित्येभ्यो नमः स्वाहा ।

108– ओं मुक्तेभ्यो नमः स्वाहा ।

109– ओं दिव्येभ्यो नमः स्वाहा ।

110– ओं समस्तपरिवाराय श्रीमते नारायणाय नमः स्वाहा ।

111– ओं सावित्रीं तर्पयामि ।

112– ओं गायत्रीं तर्पयामि ।

113– ओं छन्दांसि तर्पयामि ।

114– ओं ऋग्वेदं तर्पयामि ।

115– ओं यजुर्वेदं तर्पयामि ।

116– ओं सामवेदं तर्पयामि ।

117– ओं अर्थवाङ्गिरसं तर्पयामि ।

118– ओं इतिहासपुराणे तर्पयामि ।

119– ओं सर्वदेवान् तर्पयामि ।

120– ओं सर्वदेवजनान् तर्पयामि ।

121– ओं सर्वभूतानि तर्पयामि ।

अद्यामुकगोत्रममुकनामानं मम पित्रात्मकं प्रद्युम्नस्वरूपिणं भगवन्तं तर्पयामि ।

अद्यामुकगोत्रममुकनामानं मम पितामहात्मकं सङ्कर्षणस्वरूपिणं भगवन्तं तर्पयामि ।

अद्यामुकगोत्रममुकनामानं मम प्रपितामहात्मकं वासुदेवस्वरूपिणं भगवन्तं तर्पयामि ।

एवं हि

अद्यामुकगोत्राममुकनाम्नीं मम मातृरूपां सत्यां तर्पयामि ।

अद्यामुकगोत्रममुकनाम्नीं मम पितामहीस्वरूपां हिरण्यां तर्पयामि ।

अद्यामुकगोत्राममुकनाम्नीं प्रपितामहीं हरिणीस्वरूपां तर्पयामि ।

मातामहादीनामपि तर्पणं कार्यम् । यथा—

अद्यामुकगोत्रममुकनामानं मातामहात्मकं प्रद्युम्नस्वरूपिणं भगवन्तं तर्पयामि ।

अद्यामुकगोत्रममुकनामानं प्रमातामहात्मकं सङ्कर्षणस्वरूपिणं भगवन्तं तर्पयामि ।

अद्यामुकगोत्रममुकनामानं वृद्धप्रमातामहात्मकं वासुदेव-स्वरूपिणं तर्पयामि ।

अद्यामुकगोत्राममुकनाम्नीं मम मातामहीस्वरूपां सत्यां तर्पयामि ।

अद्यामुकगोत्राममुकनाम्नीं मम प्रमातामहीस्वरूपां हिरण्यां तर्पयामि ।

अद्यामुकगोत्राममुकनाम्नीं मम वृद्धप्रमातामहीस्वरूपां हरिणीं-तर्पयामि ।

इदमेव वैष्णवानां श्राद्धे वैशिष्ट्यम् । अन्यत् सर्वं स्मार्तवज्ज्ञेयम् ।

**अथ भुवः पञ्च संस्काराः**

> **यस्य द्विरदवक्त्राद्याः पारिषद्या परःशतम् ।**
> **विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥**
> **सर्वमङ्गलमाङ्गल्यं सर्वोपद्रवनाशनम् ।**
> **वन्दे रामानुजाचार्यस्य नित्यं पादाम्बुजद्वयम् ॥**

**यज्ञभूमिशोधनम् —**

1- ओं भूरसीत्यादिना यज्ञ भूमिशोधनम् ।

2- अश्माश्च मै - इत्यादिना मन्त्रेण मृत्तिकास्थापनम् ।
दर्भान् गृहीत्वा पठेत्-

3- ओं एव वस्तोमी मरुतऽइयङ् गोर्मान इत्यादिना ।

4- ओं यद् देवा देवहेडननं इत्यादिना दर्भैः परिसमूहनम् ।

5- मानस्तोके तनये इत्यादिना मन्त्रेण गोमयोदकेन भूमि-परिशोधनम् ।

6- ओं त्वाभिद्य हवामहे इत्यादिना मन्त्रेण भूम्यां स्रुवेण उल्लेखनम् ।

7- ओं प्रथमाद्द्वितीयैर्द्वितीयास्तृतीयैस्तृतीया सत्येन ओं दक्षिणा मारीह ओं ओं प्रतीचीमारीह जगती इत्यादि । ओं उदीचीमारोहा इत्यादिना अनामिकाङ्गुण्ठाभ्यां मृदस्त्रि-रुद्धरणम् ।

8- ओं सदसस्यपतिमद्भूतं प्रियमिन्द्रस्य ।

वेद्यां सुवेणोद्धृतपांशूनामनामिकाङ्गुष्ठाभ्यामुद्धरणम्—

ओं व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञः - इत्यादिना जलेनाभिषेचनम् - शन्नो देवी - इत्यादि ।

पृथिवीपूजनानन्तरं वराहपूजनम् ।

ओं वराहवः स्वतपसो विद्युन्महसो इति अनन्तपूजनम् ।

ओं तन्मित्रस्य वरुणस्याभिचक्षे -

कूर्मपूजनम् -

ओं कुर्मस्त आयुरञ्जरं यदग्ने ।

विशेषः पुण्याहवाचनकर्मणि - यजमानस्य हस्तस्थकलशं (घटं) ब्राह्मणाः स्वहस्तस्थदर्भाग्रैः स्पृशन्तः निम्नस्थाः श्लोकाः पठेयु (ब्रूयुः) ।

**दर्भैः स्पृशन्तु कलशं ब्राह्मणैः सहदेशिकैः ।**
**ततश्च शुद्धमन्त्रान् सुपठेदेवं समाहितः ॥**
**शुद्धयेऽस्तु देवो वासुदेवास्तु शुद्धये ।**

**सङ्कर्षणः शुद्धयेऽस्तु प्रद्युम्नश्चास्तु शुद्धये ।**
**शुद्धयेऽस्त्वनिरुद्धोऽपि केशवश्चास्तु शुद्धये ॥**
**नारायणोऽस्तु विश्वेशः शुद्धये सर्वकर्मणाम् ॥**

इत्यादीनि पद्यानि पठनीयानि ।

## विश्वक्सेनपूजनम् ( गणपतिस्थाने )

अथाग्निकुण्डकृत्यम् -

इन्धनशोधनम्-
ओं कस्त्वा सत्यो मदानाम ✕ हिष्टा ।

कुण्डे इन्धनस्थापनम् -

ओं त्वामिद्धि हवामहे ।

अग्निशोधनम् -

ओं अग्नावाग्निश्चरति इत्यादिमन्त्रेण अग्निग्रहणम् ।
ओं मयि गृह्णाम्यग्नेऽग्नि ✕ ई

अग्नेः संस्काराः -

एकस्मिन् पात्रे स्थापितमग्निमन्येन पात्रेण विधाय - "ओं हं नमः अग्नये शुचिपदे ।

(1) नमः गर्भाधानसंस्कारं सम्पादयामि ।
　　ओं गब्र्भोऽस्योषधीनङ्ववर्भोव्वनस्पतीनां

1- पुंसवनम्-ओं हं नमः अग्नये शुचिपदे नमः ।
　　ओं व्विवस्वन् नादित्यैषते इत्यादीना मन्त्रेण ।

**सीमान्तसंस्कारः —**

ओं अजीजनी हि पवमानसूर्य ।

(1) जातकर्मपठनीयः ओं एज तु दशमास्यो गर्भो जरायुणा सह ।
　　(कुण्डेऽग्निं निदध्यात्)

नामकरणम् - (1) ओं यदापियेष मातरपुत्रः ।

निष्क्रमणसंस्कारः - (1) ओं पूषा पञ्चाक्षरेण इत्यादि ।

अन्नप्राशनसंस्कारः - ओं अन्नपतेऽन्नस्य इत्यादि ।

चूडाकरणसंस्कारः — ओं अग्नऽआयाहि व्वीतये ।

कर्णवेधसंस्कारः - (1) ओं भद्रं कर्णेभिः इत्यादि ।

उपनयनसंस्कारः – (1) ओं अग्निरेकाक्षरेण प्राणः ।

सावित्रीश्रवणसंस्कारः - (1) ओं भूर्भुवः स्वः वैश्वानराय विद्महे ससजिह्वाय धीमहि तन्नोऽग्निः प्रचोदयात् ।

वेदारम्भसंस्कारः - (1) सम्पादयामि मन्त्रेणैव केवलम् ।

गोदानसंस्कारः - (1) गावऽउपावता वतम्मही इत्यादि ।

समावर्तनसंस्कारः (1) ओं व्रतङ्कृणुताग्नि ।

स्नातकव्रतसंस्कारः- (1) ओं हं नमः अग्नये शुचिषदेनम् स्नातक-व्रतसंस्कारं सम्पादयामि ।

विवाहसंस्कारः - (1) ओं भगऽ एव भगवा अस्तु देवास्तेन व्वयं भगवन्तः स्यामः ।

प्रणीतापात्रं वामहस्ते कृत्वा पठनीयः—

इन्द्र आसान्नेता इत्यादि -

तदनन्तरं दक्षिणहस्तेन जलेन प्रपूरयन् पठेत् -

ओं उदुत्तमं वरुण इत्यादि ।

दक्षिणहस्तस्थितस्य अनामिकया प्रणीतापात्रं स्पृशन् पठेत् -

तत्त्वायामि इत्यादि ।

ये ते शतमित्यादि परिस्तरणम् ।

पात्रासादनम् - ओं तत्वायामि इत्यादि ।

पवित्रार्थं साग्रान्तर्गर्भयुतकुशग्रहणम् ।

ओं त्र्यम्बकं यजामहे इत्यादिना मन्त्रेण पवित्रद्वयं कुर्यात् -

ओं पवित्रेस्थो वैष्णव्यो - इत्यादिना मन्त्रेण ।

ततो द्वादशाङ्गुलदीर्घकरतलसमितखातं पद्मपत्राकृतिं कमलमुकला-कृतिं वा प्रोक्षणीपात्रं कुर्यात् ।

ओं इमं मे वरुणस्य इत्यादिना मन्त्रेण-

द्वे पवित्रे प्रोक्षणीपात्रे निदध्यात् । देवस्य त्वा सवितुः प्रसवेश्विनौ इत्यादिमन्त्रेण ।

आताम्रखधातो मृत्तिकग्ग वा

द्वादशाङ्गुलविस्तृतां प्रादेशोन्वाऽस्थाली स्थापयेत् ।ओं घृतवती ।

अथ चरुस्थालीं प्रोक्षण्युदकेन–

सम्प्रोक्ष्य आघीतनादिकं कृत्वा वह्नेर्दक्षिणतः समानीय पश्चिमतः कुशेषु निधाय कुशैराच्छादयेत् – अन्नपतेऽन्नस्य इत्यादि ।

श्रुवग्रहणम् – स्त्रुवश्च मे चमसा च मे इत्यादि ।

सम्मार्जनकुशैः प्रणीतोदकेन स्त्रुवप्रोक्षणं कुर्यात् – ओं प्रत्युष्ट—

दर्भैः श्रुवसम्मार्जनम् – ओं अनिशितोशि ... ... इत्यादि ।

वह्नौ श्रुवप्रतपनम् – ओं पुनन्तु मां देवजनाः इत्यादि ।

प्रणीतोदकेन श्रुवमभिषिञ्चयेत् – ओं शन्नो देवी ...

पुनः श्रुवं प्रतापयेत् –

ओं तत्त्वायामि इत्यादि ।

अग्नेरुत्तरतः कुशेषु श्रुवमुदङ्मुखं निदध्यात् –

ओं तमुत्वादध्यङ ऋषिः

आज्यमग्नेः प्रदक्षिणं कारयित्वा – स्वस्य पुरतः स्थापयेत् –

ओं तेजोऽसि शुक्रमसि ...

एवं चरुमपि दक्षिणतः समानीय, अग्नेः प्रदक्षिणं कारयित्वा पुरतः स्थापयेत् —

ओं पशुभिः पशूनाप्नोति ।

आज्यस्य निरीक्षणम् — ओं आप व स्व हिरण्यवदस्व ।

आज्यस्य पवित्राभ्यां त्रिरुत्पवनम् । ओं प्रत्युष्ट रक्षः ।

अपद्रव्ये सति –

तन्निरीक्ष्य तन्निस्सारणम् –

ओं आस्वा हर्ष मत्तरः ।

आज्ये पवित्रे निदध्यात् –

ओं विष्णोरराटमसि ।

प्रोक्षणीपात्रस्थपवित्रस्थपवित्राभ्यां प्रणीतोदकेन – आसादितवस्तु सेचनम् ।

ओं देवस्य त्वा सवितुः ।

ज्वलत्तृणादिना हविर्वेष्टयित्वा वह्नौ प्रदक्षिणक्रमेण क्षिपेत् ।
ओं घृतेन सन्देहत्
ओं धृष्टिरस्यापारनेऽग्नि ।
कुशैराच्छाद्य चरूं ब्रह्मणे समर्पयेत् ।
ओं आप्ययस्व समेतु ते. ।
ततोऽग्नेः प्रार्थना ।
चत्वारि शृङ्गः त्रयोऽस्य पादः इत्यादि ।
पाञ्चरात्रे—

1– **चक्रादिचिह्नीतेन स्थापिते यत्र विग्रहे ।**
**न सान्निध्यं हरिर्याति क्रियाकोटिशतैरपि ॥**
**शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नेन रहितैः द्विजैः ।**
**यद्यत् कृतं तत्तु महाहानिप्रदं भवेत् ॥**

पञ्चरात्रे – कुण्ड शरीरम् ।

**प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ।**
**उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥**
**मुमुक्षुणां वैष्णवानां चतुरस्त्रकुण्डं कार्यम् ॥** – पञ्चरात्रे ।
**पुत्रप्राप्तये योनिकुण्डमुक्तमृषिभिस्तत्त्वदर्शिभिः ।**

**विष्णुबलिः**

वशिष्ठमतानुसारमिदं कृत्यं गर्भाधानतोऽष्टमे मासि भवति । तन्मतेन संस्कारोऽयं सिते पक्षे विधेयः । यदा चन्द्रः श्रवणरोहिणी-पुष्यनक्षत्रेषु संल्लगति द्वितीयासप्तमीद्वादशीषु तिथिष्वस्य विधानं विहितम् । अनेन विष्णुबलिदानेन भ्रूणबाधाः विनश्यति तथा च सुखेन सन्तानोत्पत्तिर्भवति । इदं कृत्यं प्रत्येकस्मिन् गर्भाधाने विधातव्यम् । अनेन प्रकारेणास्य विधानं भवति । पूर्वस्मिन्नहनि नान्दीश्राद्धं विधेयम् । अपरस्मिन् दिने अग्निहोमः – आज्यभागश्च विधीयते ।

अग्नेः दक्षिणस्यां दिशि कमलाकारविशिष्टयुतस्वस्तिकाकारविशिष्टं स्थण्डिलं क्रियते । यस्मिन् विष्णवे सुपक्वस्य तण्डुलस्य (भक्तस्य) सर्पिषा सह चतुष्षष्टिसंख्याकाः आहुतयः प्रदीयन्ते ।

केचित् जनाः विष्णुं विहाय अग्नये एव बलिदानं कुर्वन्ति । अस्मिन् कृत्ये होमे वा ऋग्वेदोक्तमन्त्राणामुच्चारणं भवति[1] ।

उत्तरपूर्वयोरन्तराले एकं वर्गाकारं स्थलं गोमयनोपलिप्य, तत् स्थलं सितमृदा चतुषष्टिभागेषु विभज्य, सुपक्वस्य तण्डुलस्य (भक्तस्य) चतुष्षष्टिसंख्याकाः आहुतयो दीयन्ते । उपर्युक्तानां अधो-लिखितानां मन्त्राणामुच्चारणं भवति ।

चतुष्षष्टिनामाहुतिनामुपरि बलिरेको विष्णवे स्थाप्यते, नमो नारायणायेति मन्त्रश्च उच्चार्य्यते । पतिः पत्नी च पार्थक्येन तण्डुल-पिण्डद्वयं (भक्तपिण्डद्वयम्) भक्षयति । तदनन्तरमग्निस्विष्टंकृदिति बलिर्वितीर्यते ।

ब्राह्मणभोजनं दक्षिणादानं च भवति । वैखानसेन[2] विष्णुबलेरेकं भिन्नं रूपमुपस्थापितम् । सर्वप्रथमग्नेरन्यदेवगणस्य च प्रणधिपात्रोत्तरें आह्वानं भवति ।

अन्ते च "ओं भूः ओं भुवः ओं स्वः ओं भूर्भुवः स्वः" इति व्याहृतिचतुष्टयेन पुरुषाह्वानं (आकरणम्) क्रियते ।

तदनन्तरमग्ने पूर्वस्मिन् (पूर्वे) संस्कारवती (विधात्रा) कुशेषु केशवनारायणमाधवगोविन्दविष्णुमधुसूदनत्रिविक्रिमवामनश्रीधरपद्म-नाभदामोदरनामभिराह्वानं करोति ।

---

1. ऋग्वेद - 1/22/16/21, 1/154/1 - 6/6-69/1-18, 7/104?11, 10/90/1-16, 10/184/1-3.
2. ऋग्वेद, 3/13.

तदनन्तरं विष्णुनिम्नोक्तैः मन्त्रैः स्नापयति विष्णोरभिषेकानन्तरं द्वादशनामभिः चन्दनपुष्पादिना च विष्णोः पूजनं विधीयते । पूजनानन्तरं घृतस्य निम्नोक्तै[1]र्मन्त्रैः आहुत्यादयो दीयन्ते—

तदनन्तरं संस्कारवती पयसि पक्वानां तण्डुलानां बलिः, यस्मिन् आज्यं स्थापितं भवति । पोषयन् द्वादशनामान्युच्चारयन्[2] द्वादशभि-र्मन्त्रैः बलिं प्रयच्छति । चतुर्णां वेदानां मन्त्रान् पठति । देवानां स्तुतिं करोति द्वादशनामभिः प्रणमति च । अन्ते तद्भार्या अवशिष्ट-तण्डुलभागमत्ति[3] । विष्णुबलिरयं सीमन्तसंस्कारस्थाने क्रियते । इति वैष्णवेषु वैशिष्ट्यम् ।

वेदधर्मशास्त्रवचनानि —

ऋग्वेदेऽथर्ववेदेऽग्निपुराणगृह्यसूत्रेषु च तर्पणविषये इत्थं प्रति-पादितम्— अग्निष्वात्तास्तृप्यन्ताम् । सोमपास्तृप्यन्ताम् । वसुरुद्रा-दित्यास्तृप्यन्ताम् ।

परन्तु वैष्णवानां कृते वैष्णवाचार्यैः इत्थं प्रतिपादितम्— विष्णु - अनिरुद्धप्रद्युम्नस्वरूपाः पितरस्तृप्यन्ताम् ।

सूतसंहितायां प्रतिपादितं यत्फलं यज्ञादिभिर्न लभ्यते तत्फलं एकादश्याः व्रतेन सद्यःमानवो लभते ।

---

1. मन्त्राः तैत्तरीयसंहितायां - 4/1/5/11 ; ऋग्वेदे - 10/9/1 -3, हिरण्यवर्णा तैत्तरीयसंहितायाम् - 5/6/1, सोऽध्याये यस्यारंभो पवमानतो भवति ।
2. "अतो देवा" ऋग्वेद - 1/22/16/21. "विष्णोर्नुकम्"- 1/154/1-7, "परोमात्र या "तैत्तिरीयब्राह्मणे- 2/8/3, "विचक्रमे त्रिदैवाः" ; "तदस्य प्रियम्", तैत्तरीय सं.-2/४य६, ऋग्वेदे - 1/154/3; "प्रतविष्णुः "तैत्तरीयब्राह्मण-2/4/3, ऋग्वेदे - 1/154/2.
3. 1/22/16/31 एवं 1/154/1/6.



तैत्तिरीयब्राह्मण, 2/8/3.

न्देदेनापि स्मृतिभिरपि विश्वानां कृते शिरोमुण्डनं न विहितम् । रामानुजाचार्यानुयायीवैष्णवतैंगलैः सम्प्रदाये चिरकालतो विधवा-शिरोमुण्डनं निषिद्धम् । परन्तु शून्द्रकमलाकरेणेत्थं प्रतिपादितं यद् गौड़देशीयाः मृतधवाः मुण्डनं विधाय शिलां धारयन्ति स्म" ।

## तिलकमुत चिह्नाङ्कनम्

मानवेन स्नानान्तरमाचमनादिकं विधाय स्वकीयसम्प्रदायानुसारं शिरसि तथा अन्येषु अङ्गेषु चिह्नादिकं विधेयम् । अस्मिन् विषये आह्निकप्रकाशे[1] स्मृतिमुक्ताफले[2] ब्रह्माण्डपुराणेषु चेत्थं प्रतिपादितं यद् - ऊर्ध्वपुण्ड्रादितिलकं कृते गङ्गातटतः सिन्धुतटतः विष्णुपवित्र-स्थलतः वल्मीकतः तुलसीमूलतश्च मृत्तिका ग्राह्या । सर्वेष्वङ्गेषु — ऊर्ध्वपुण्ड्रत्रिपुण्ड्रादीनि चिह्नानि धारणीयानि । एतैश्चिह्नैः[3] रहितस्य मनुष्यस्य निखिलानि यज्ञदानजपहोमवेदाध्ययनपितृतर्पणादीनि निष्फलानि भवन्तीति वृद्धहारीतस्मृतौ विस्तारेण वर्णितम् । परन्तु पाशुपतेनान्येन शैवसम्प्रदायेन चोर्ध्वपुण्ड्रस्य निन्दा त्रिपुण्ड्रस्य च प्रशंसा कृता । गोपीचन्दनादिनापि - ऊर्ध्वपुण्ड्रविधानमुक्तम् । एवमेव पञ्चरात्रेणापि त्रिपुण्ड्रस्य निन्दा शङ्खचक्रगदानां विष्णो-रन्यचिह्नानां च प्रशंसा विहिता । माध्वसम्प्रदायवैष्णवभक्ताः धातुमयेन शङ्खचक्रादिना (तप्तमुद्रया) निजतनुरङ्कितं कुर्वन्ति कारयन्ति वा ।

वृद्धहारीतेन[4] पृथ्वीचन्द्रोदयादिभिर्ग्रन्थैश्चास्य चिह्नाङ्कनस्य भर्त्सना कृता । परन्तु वायुविष्णुपुराणाभ्यामस्य चिह्नाङ्कनस्य समर्थनं कृतम्[5] ।

---

1. पृ.= 248 - 252.
2. आह्निक पृ. 292 - 310
3. वृद्धहारीतस्मृति, 2/58 - 72.
4. 2/44 - 45.
5. 3/1/1/94.

# उपसंहारः

स्वर्गापवर्गास्पदीभूतोऽयं भारतवर्षः धर्मप्राणा इयं भारतभूमी — अत्रानेके धर्माः – अनेके सम्प्रदायाश्च सन्ति । ते भारतीयेषु विशेषतो हिन्दुपदवाच्येषु वेदानुगताः पुराणानुगताः स्मृत्यनुगताश्चानुस्त्रीयन्ते । अयमेव पन्था दशविधसामान्यधर्मानन्तरं विशेषधर्मश्च निगद्यते । तत्र सनातनो धर्मः प्रमुखः । अस्मिन् सनातने धर्मे वेदपुराणस्मृतीनां महानादरो वर्तते ।

वेदे काण्डत्रयं कर्मोपासनाज्ञानात्मकं वर्तते । एतत् काण्डत्रयस्यैतिहासपुराणस्मृतिषु उपबृंहणं प्राप्यते । एतेषां कर्मकाण्डोपासनाकाण्डज्ञानकाण्डानां च सम्प्रदायभेदेन मुख्यतः पञ्चविधित्वं भवति —

1. शैवप्रसम्प्रदायः
2. वैष्णवसम्प्रदायः
3. शाक्तसम्प्रदायः
4. सौरसम्प्रदायः
5. गाणपत्यसम्प्रदायश्च ।

एतदतिरिक्ताः – अपि बहवोऽवान्तरसम्प्रदायाः सन्ति । यथा – शैवे—

1. पाशुपतशैवाः
2. सिद्धान्तशैवाः
3. वीरशैवाः
4. नकुलीशशैवाः
5. कापालिकशैवाः

एवमेव वैष्णवे —

1. रामानुजीयाः वैष्णवाः

2. माध्वाः वैष्णवाः
3. बाल्लभाः वैष्णवाः
4. नैम्बार्काः वैष्णवाः
5. रामानन्दीयाः वैष्णवाः

महाप्रभुचैतन्यः एवमेवापरेऽपि वैष्णवाः । शाक्तसम्प्रदायेऽपि —

1. दक्षिणचाराः शाक्ताः
2. वामाचाराः शाक्ताः
3. समयाचाराः शाक्ताः

एवमन्येऽपि —

सौरे सम्प्रदाये

गागपत्यसम्प्रदाये

एवमन्ये भेदाः भवितुमर्हन्ति ।

एतेषु सम्प्रदायेषु 'काण्ड'स्वरूपभेदेन उपासनास्वरूपभेदेनापि बहवो भेदाः । यतो हि विशालोऽयं वैदिकः पौराणिकः स्मार्तः वाङ्मयः कल्पतरोरस्यानेकाः शाखाः प्रशाखाश्च सन्ति । विभिन्न-शाखाश्रयेण विभिन्नाः सम्प्रदायाः जाताः । सम्प्रदायभेदाच्च कर्म-काण्डोपासनाभेदाः - अपि सञ्जाताः । सामान्यरूपेण मुख्यमुख्य-कर्मकाण्डोपासनादिषु शैववैष्णवसाम्प्रदायिकेषु महान् भेदो नोपलक्ष्यते एव । तथापि विशिष्टेषु कर्मोपासनादिषु शैववैष्णव-सम्प्रदायकृतो भेदो लक्ष्यते एव । वैदिकेषु स्मार्तेषु कर्मसु उपासनासु च भेदो नास्ति, किन्तु पौराणिकेषु कर्मकाण्डेषु पौराणिकेषु उपासनासु च सम्प्रदायकृतो भेदो लक्ष्यते । पुराणानि च सम्प्रदा-यानुसारं प्रथन्ते । कानिचित् शैवानि, कानिचिद् वैष्णवानि, कानिचित् शाक्तानि कानिचित् सौराणि, कानिचिद् गाणपत्यानि, शिववैष्णवादि वैशिष्ट्यमापाद्य, शैवपुराणानि वैष्णवपुराणादीनि

परिगणितानि । एतेषु शैववैष्णवादिषु पुराणेषु सम्प्रदायानुसारमाचारे क्रियायां कर्मणि उपासनायां च अधिकारिभेदाः सन्ति । यथा शैवानां कृते भस्मधारणं रुद्राक्षधारणं, वैष्णवानां कृते सौवर्णेन राजतेन वा शङ्खचक्रादिना पञ्च संस्कारात्मकं विधानं दीक्षाविधानं च ऊर्ध्वपुण्ड्रधारणं तुलसीमालाधारणं वैजयन्तीधारणं च भवति । एवमेव शाक्तादिसम्प्रदायेष्वप्यवान्तरभेदाः सन्ति । आवान्तरविशेषभेदमादायैव विभिन्नशैवाचार्याः विभिन्न-वैष्णवाचार्याः भेदाः प्रवर्तन्ते । एवं विविधभेदप्रवर्तने विशेषः आधारः पुराणान्येव । अत एव शैवपुराणोक्तकर्मकाण्डाः, वैष्णव-पुराणोक्तकर्मकाण्डाः शाक्तपुराणोक्तकर्मकाण्डाः विद्यन्ते । अस्य प्रबन्धस्य पूर्वोक्तभेदमाश्रित्य वैष्णवपुराणेषु कीदृशः कर्मकाण्ड इति विवेचयितुं प्रवर्तनमस्य शोधप्रबन्धस्य मुख्यमुद्देश्यं यदन्यपुराणोक्त-कर्मकाण्डेभ्योऽतिरिक्ताः को पुनः वैष्णवपुराणोक्ताः कर्मकाण्डाः तेषां किं वैशिष्ट्यमिति । अतोऽत्र प्रथमम् — वैष्णवशब्दार्थ-निरूपणम्, वैष्णवस्वरूपनिरूपणम्, वैष्णवधर्मादिनिरूपणपुरस्सरं वैष्णवपुराणानीमानि, तत्र को च हेतुः इति विचारितम् । विष्णु-नारद-भागवत-पद्म-गरुड-वाराह-पुराणानीति । तदन्तरं कर्मपदार्थः कर्माणि च कुत्र तिष्ठन्तीति क्रियाकर्माशयपदार्थः कण्डनपदार्थः कर्मप्रयोजनमित्यादीनि विवृ- तानि । ततः प्रधानानुरोधेन क्रमशः प्रथमम्—

1– विष्णुपुराणोक्तः वैष्णवकर्मकाण्डः ।
2– नारदीयपुराणोक्तः " "
3– भागवत " " "
4– पाद्म " " "
5– गरुडपुराणोक्तः वैष्णवकर्मकाण्डः
6– वाराहपुराणोक्तः वैष्णवकर्मकाण्डः

ततः श्रौतकर्माणि विवेचितानि ।अन्ते च वैष्णवोपदेशः,. वैष्णव-श्राद्धः, विष्णुबलिप्रभृतयोऽपेक्षिताः वैष्णवसम्बन्धिनो विषया अपि यथायथं निरूपिताः । एवं चानेन शोधप्रबन्धेन विदुषां पुरतः वैष्णवपुराणोक्ताः कर्मकाण्डा उपस्थापिताः ।

अनेन स्पष्टो भवति यदन्यदीयकर्मकाण्डेभ्योऽतिरिक्ताः वैष्णव-पुराणोक्ताः काण्डाः कति सन्ति तेषां च किं वैशिष्ट्यं कथं च वैशिष्ट्यम्, का चोपादेयता दृष्टा, यथा —

स्मार्तकर्मकाण्डेषु याः प्रक्रियाः प्रतिष्ठिताः ताभिः प्रक्रियाभिः सह वैष्णवकर्मकाण्डप्रक्रियायां स्वरूपभेदः, तत्र तत्र देवार्चनविषये प्रातिनिध्येनार्चनप्रक्रियाभेदाः पूजोपचारसामग्रीष्वपि महान् भेदः । तथा च सकलयज्ञकर्मसम्पादनाय अधिकारलाभाय दीक्षाग्रहणस्य महतो उपादेयता या वैष्णवेतरासु स्मार्तोपासनासु न स प्रतिबन्धः । तथा च दीक्षाविधिष्वपि अन्यसम्प्रदायापेक्षया स्मार्तापेक्षया च वैष्णवदीक्षाविधिः विशिष्यते । यतोऽन्यत्र कुलाचारद्वारा स्वस्वपरम्परायामुपास्यमानानां इष्टदेवतानां मन्त्रदीक्षाप्रदानमेव भवति । परन्तु श्रीवैष्णवसम्प्रदाये विष्णोर्मन्त्रदीक्षाविधौ - आचार्यैः पञ्चसंस्कारो विधीयते । स च

**तापः पुण्ड्रः तथा नाममन्त्रो योग एव च ।**
**अमी पञ्चैव संस्काराः परमैकान्तिहेतवः ॥**

इति प्रमाणेन सर्वापेक्षया वैशिष्ट्यमिदमपि । तथा च विष्णोरर्चायां प्रतिष्ठादिषु च कर्मकाण्डप्रक्रियावैशिष्ट्यं बिभर्ति एव । एवं च वैष्णवश्राद्धविधिः विष्णुबलिविधिश्चापि - स्मार्ताद्यपेक्षया वैलक्षण्यं वैचक्षण्यं च वैशिष्ट्यं महत्त्वाधायकं तत्त्वमित्येतत् सर्वं शोधप्रबन्धे यथाध्यायं यथास्थलं वर्णितमेव । तेनैव वैष्णवपुराणेषु कर्मकाण्ड-विषयता सुतरां महद्वैशिष्ट्यं प्रस्थापयति ।

एवं वैष्णवपुराणेषु कर्मकाण्डः इत्यस्योपादेयता - अपि विलक्षणैव वर्तते । यतोऽन्यस्मार्तादिसम्प्रदायेषु कर्मकाण्डस्यो-

द्देश्यं — धर्मार्थकाममोक्षसम्पादनमेव । तेन सकलानि कर्माणि कामनामयानि अथवा सकामाः जनाः तानि सम्पादयन्ति; परन्तु वैष्णवैः धर्मार्थकाममोक्षाख्यपुरुषार्थलाभोद्देश्येन न कर्माचरणं क्रियते. अपि तु तैः केवलं भगवत्प्रीत्यर्थमेव सर्वं कर्म विधीयते ।

एतावता सिद्ध्यति यद् यदा कर्माण्येतानि न कामनाप्रयोज्यानि, किन्तु जन्म गृहीत्वा कर्त्तव्यबुद्ध्यापि भगवत्प्रीतिकराण्येवावधार्य भगवद्भागवतसेवारूपाय तानि मत्वा समुपास्यन्ते ।

अत एवान्ततो गत्वा सकलकर्मणां सम्पादनेन विष्णोः प्रसादनं प्रमुखं विचार्य जपयज्ञाङ्गतया विनियोगः क्रियते । जपनीयो मन्त्रश्च तेषां कृते अष्टाक्षर एव । अष्टाक्षरस्य महिमा वैष्णवपुराणेषु पाञ्च-रात्रागमादिषु च विशेषरूपेणोपलभ्यते तेन वैष्णवाः प्रतिपादयन्ति सर्वाणि कर्माणि क्रियाश्च सर्वं जगच्च मन्त्राश्च अष्टाक्षरे प्रतिष्ठित इति कृत्वा अनुसन्धेयविषयस्योपादेयाता विदुषां न तिरोहिता । वैष्णवः जीवं जगच्च विष्णोः शरीररूपमेवेति न स्वीकुर्वन्ति । अन्य-दार्शनिकसिद्धान्त इव जीवः काल्पनिकः जगत् काल्पनिकं तथा जीवजगच्चाभासिकं परन्तु विष्णोर्भिन्नाः जीवाः विष्णोर्भिन्नञ्च जगदित्यामनन्ति सर्वं दृश्यं दृश्यामानं च विष्णोः शरीररूपमेव । तथा च प्रमाणं - यः आत्मनि तिष्ठन् यस्यात्मा शरीरं यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरं — इत्यादि श्रुतिभिः विष्णोः शरीरत्वं, किन्तु विष्णोस्तुष्टिरेव निःश्रेयस इति च मन्यन्ते । अतः कर्मोपासनाज्ञानानि विष्णोस्तुष्ट्यर्थं भवन्ति । अतः विष्णोस्तुष्ट्यर्थे क्रियमाणे कर्मकाण्डे जीवबाधां नानुमोदन्ते । तस्मात् कर्मसु एवंविधान्यनेकानि कर्माणि सन्ति, यत्र जीवबाधा जायते । यथा 'सोमयागः', 'अश्वमेधागः', 'अजाश्च बाधा जायते । अत्र अजाश्च यो बाधा विष्णोरेव बाधा । यो हि वैष्णवाय ते जीवः जगच्च विष्णोः शरीरमेव । अतः अजास्वरूपस्य शरीरस्य बाधायां शरीरिणः बाधा स्पष्टा एव ।

अस्मादेव काराणाद् ईदृशानां कर्मणां विषये किञ्चिद् विकल्प-यन्ति । यथा वैष्णवाचार्येण वेदान्तदैशिकेन सोमयागे अजपशुस्थाने माषपिष्ठान्ननिर्मितेन पशुना यागं विधीयते । अत एव च बहुभ्यः श्रौतस्मार्तकर्मकाण्डेभ्यः वैष्णवकर्मकाण्ड़ा अतिरिच्यन्ते ।

वैष्णवपुराणे एवंविधानां श्रौतस्मार्तकर्मकाण्डेभ्यः अंतिरिच्यमानानां कर्मकाण्डानां सङ्कलनमस्ति ।

पूर्वोक्तेष्वध्यायेषु एवमुदाहृतमपि । यथा इन्द्रध्वजपूजास्थाने गोवर्द्धनपूजा, यज्ञवाटस्थाने याज्ञिकपत्नीनां भगवद्दर्शने - उपस्थानं अश्वमेधसहस्रस्थाने वायपेयशतस्थाने कोटिगोदानस्थाने विष्णोर्नाम-सङ्कीर्तनं नाम कर्मकाण्डः संल्लिखितः ।

वैष्णवसम्प्रदाये — उपासना, प्रपत्तिभक्तिरेव गरीयसी तेन बहूनां कर्मकाण्डानां स्थाने कापि उपासना विहिता अथवा श्रौतस्मार्त-कर्मकाण्डोपादानवस्तुविषये विकल्परूपेण प्रतिनिधिभूतानि द्रव्यानि सङ्कलितानि पूर्वोक्तेष्वध्यायेषु एवंविधानां वैष्णवकर्मकाण्डानामुल्लेखः तत्तत्पुराणेषु वर्तत इति अस्मिन् प्रबन्धे प्रदर्शितम् । वैष्णवोक्तकर्म-काण्डानामिदमेव वैशिष्ट्यं यद् विष्णोरुपासना प्रसरेत्, जीवरक्षा च भवेदिति ।



# अनुशीलितग्रन्थसूची


| क्रमाङ्कः | ग्रन्थनाम | | लेखकः/प्रकाशकः/मुद्रको वा |
|---|---|---|---|
| 1– | अथर्ववेदः | | अजमेरनगरे, वैदिकयन्त्रालये मुद्रिता वै. सं. 2001 |
| 2– | अगस्त्यसंहिता | | |
| 3– | आह्निकसूत्रावलि, | : | रामवाडो, मुम्बई, वैक्रम संवत् सरः 1972; शाकः = 1838. |
| 4– | ऋग्वेदः | | उक्षतरणामिधाननगरे विद्या-मन्दिरसंस्थान मुद्रायन्त्रालये मुद्रित. (वै. सं. १९७२) |
| 5– | कात्यायनश्रौतसूत्रम् | : | पं. विद्याधरशर्मा, ज्ञानमण्डल मन्त्रालय, काशी – 88. |
| 6– | गीता | : | श्रीवैङ्कटेश्वरयन्त्रालये मुद्रिता शाकाब्दाः, 98 1841. वैक्रमाब्दा, 1976. |
| 7– | गरुडपुराणम् | : | चौखम्बा संस्कृत सीरीज़ आफिस, वाराणसी, सं.= 2021 |
| 8– | तैत्तरीयसंहिता | | |
| 9– | तैत्तरीयब्राह्मणम् | | |
| 10– | धर्मशास्त्रम्, भाग–1 | : | भारतरत्नमहामहोपाध्याय डॉ. पाण्डुरङ्ग वामन काणे लखनऊ द्वारा मुद्रितम् वै. सं.= 2031 सन् ई.=1975 |
| 11– | धर्मशास्त्रम्, भाग–2 | : | भारतरत्नमहामहोपाध्याय डॉ. |

पाण्डुरङ्ग वामन काणे, लखनऊ द्वारा मुद्रितम्, वै. सं.= 2031 सन् ई.= 1975.

12- धर्मशास्त्रम्, भाग-3 : तदेव .

13- धर्मशास्त्रम्, भाग-4 : तदेव .

14- नारदीयसंहिता : केन्द्रीयसंस्कृतविद्यापीठ तिरु-पतिद्वारा प्रकाशित, 1971 ई..

15- नारदीयपुराणम् : 11

16- नीतिशतकम् : चौखम्बासरस्वती भवन, वाराणसी, 1980 ई.

17- पराशरधर्मशास्त्रम्

18- पद्मपुराणम्, भाग-1 : महादेव चिमगजी आप्टे इत्यनेन पुण्यपत्तने आयसाक्षरैः मुद्रयित्वा प्रकाशितम्, शकाब्दाः- 1815. ख्रिस्ताब्दाः- 1993.

19- पद्मपुराणम्, भाग-1 : तदेव .

20- पद्मपुराणम्, भाग-3 : तदेव .

21- पद्मपुराणम्, भाग-4 : तदेव .

22- पातञ्जलयोगदर्शनम् :

23- पारस्करगृह्यसूत्रम् :

24- पराशरधर्मशास्त्रम् :

25- पुरुषोत्तममाहात्म्यम् : गंगा प्रिंटिंग प्रेस, मथुरा.

26- प्रश्नसंहिता : केन्द्रीय संस्कृत विद्यापीठ, तिरुपति

27- वराहपुराणम् : कलिकाता राजधान्यांम्, वै. सं.= 1893.

28- वसिष्ठस्मृतिः

29- ि:ष्णुधर्मसूत्रम्
30- विष्णुस्मृतिः
31- विष्वक्सेनसंहिता : केन्द्रीय संस्कृत विद्यापीठ, तिरुपति (आन्ध्रप्रदेश)
32- विश्वामित्रसंहिता : तदेव.
33- वैकुण्ठचन्द्रिका : श्रीवैष्णव प्रकाशन समिति, चितवन ना. अं. नेपाल द्वारा मुद्रिता-सम्पादिता च देवराज जगन्नाथशास्त्रिभ्याम्.
34- भागवतम् : गोरखपुर, गीता प्रेस, वै. सं.=1998.
35- भारद्वाजसंहिता
36- भविष्यपुराणम्
37- महाभारतम् गीता प्रेस, गोरखपुर (उ. प्र.)
38- मलमासमाहात्म्यम् खेमराज श्रीकृष्णदास श्री वैङ्कटेश्वर स्टीम प्रेस, मुम्बई.
39- मत्स्यपराणम्
40- मनुस्मृतिः
41- यजुर्वेदः श्रीपाददामोदरसातवलेकर भारतमुद्रणालय स्वाध्याय मण्डल औंध सातरा (वै. सं. १९८४)
42- याज्ञवल्क्यस्मृतिः
43- रणवीरप्रायश्चित्तः : जम्मूतवी राजधान्याम्, वै. सं.= 1875
44- बृहद्ब्रह्मसंहिता
45- बृहद्हारीतस्मृतिः

46- बृहद्वाचस्पत्याभिधानम्
47- वाल्मीकिरामायणम् : गीता प्रेस, गोरखपुर 1983 ई.
48- शतपथब्राह्मणम् पुण्यनाम्निजनपदे वेर्लीनाख्यायां राजधान्याम् मुद्रितम् (सं. १८५५)
49- श्वेताश्वतरोपनिषद्
50- षड्दर्शनसमुच्चयः
51- हिन्दी विश्वकोशः विश्वकोश प्रेस कलकत्ता (१९१७)
52- हेमाद्रिः : चतुर्वर्गचिन्तामणि, मद्रास, 1985 ई.
53- हेमचन्द्रकोशः

●

## ग्रन्थप्रणेतुः
## बंशवृक्षः



डॉ. मोतीराम रैणा शास्त्री

अस्तिहि जम्मूकश्मीरमध्येमार्गं जन्द्राहनामकं लघु जनपदम् तत्र पूर्वकालेऽनेके व्याकरणदर्शन काव्य पुराण ज्यौतिषादिशास्त्रकानन विचरण विलक्षणानां पण्डितानां कुलानि न्यवसन् कालान्तरे। विविधविपद्विध्वंसिताः केचन राजानकोपाधिधरा पण्डिताः कश्मीरतःपलायिताः जन्द्राह स्थाने निवासमरचयन् रैणा। पुनश्च जम्मू कश्मीराधिपतिः महाराजश्री गुलाबसिंहः कर्मकाण्डविधानार्थं रैणापरिवारस्यैकं विद्वासं श्रीधूर्जटिरैणा-महोदयं जम्मूनगरे सबहुमानं समानीतवान्। सच जम्मूनगरस्य पञ्चतीर्थीवीथिमध्ये अवसत् तस्यैव कुलस्याङ्कुरोऽयं मोतीरामरैणा

इत्थं च बंशवृक्षः

श्री धूर्जटिरैणा

श्री काशीराम रैणा

शिवनाभरैणा

श्री विश्वनाथरैणा

श्रीमोतीरामरैणा

